॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
२

# लघुसिद्धान्तकौमुदी

श्रीमद्वरदराजभट्टाचार्यविरचिता ।

( वार्तिकपाठ-परिभाषापाठ-धातुपाठ-गणपाठ-सूत्रा नुक्रमणिका-पाणिनीयशिक्षा सहिता )

ठक्कुरोपनामकपण्डितश्रीक[illegible]शर्मणा मैथिलेन विरचितया
संक्षिप्तबालबोधिन्या टीकया संवलिता ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।
१९९१

# भूमिका ।

विदितमेव भवतां यत् शब्दसाधुत्वज्ञानाय परमकारुणिकेन श्रीमता भगवता मुनिवरेण पाणिनिना ( अष्टाध्यायी ) ग्रन्थो व्यरचि । तस्य परमकाठिन्यात् व्याख्यानसापेक्षत्वाच्च न ततो लघुबुद्धिमतामाधुनिकानां शब्दसाधुत्वप्रतिपत्तिरतो विद्वद्वरेण श्रीमता भट्टोजिदीक्षितेन तद्व्याख्यानभूता ( सिद्धान्तकौमुदी ) व्यरचि । अस्या अपि अतिबाहुल्यात् असुलभत्वाच्च नातिसुकुमारमतीनामतो ग्रन्थात्प्रतिपत्तिरतो दयापारावारेण श्रीमता वरदराजभट्टाचार्येण ( लघुसिद्धान्तकौमुदी ) नाम ग्रन्थस्तत एवोद्धृत्य व्यधायि । अस्याश्चापि यद्यपि बहुशष्टीकाटिप्पण्यादयो विलसन्ति, परं यत्किञ्चिन्न्यूनांशत्वान्नोपयोगिताभाजिन्यस्ता सुगमतयेति मयाऽस्याः संक्षिप्तबालबोधिनी नामकटीका निरमायि । एषा च मत्कृता संक्षिप्तबालबोधिनी नाम्नी टीका शब्दशास्त्रे प्रवेष्टुमुत्सुकानां सुकुमारमतीनामध्येतॄणां कीदृशी समुपकारिणी भविष्यतीत्येतत्प्रशंसनवाक्यमवलोकनोत्तरं तथ्यं प्रतिभास्यतीत्यलम्पल्लवितेनेति शम्—

श्रीकनकलालठक्कुरः ।

* श्री *

# अथ लघुसिद्धान्तकौमुदीस्थवार्त्तिकपाठः ।

इति वार्तिकपाठः समाप्तः ।

# अथ लघुकौमुदीस्थपरिभाषाणां पाठः ।



इति परिभाषापाठः ।

# अथ गणपाठः ।

## अ० पु०

*सर्वादीनि सर्वनामानि* । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम ( पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ) ( स्वमज्ञातिधनाख्यायाम् ) ( अन्तरं बहिर्योगोपसंव्यानयोः ) त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् । इति सर्वादिः ।

## अव्ययीभा० स०

*अव्ययीभावे शरत्प्रभृतिभ्यः* । शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् दिश् दृश् विश् चतुर् त्यद् तद् यद् कियत् ( जराया जरस् ) ( प्रतिपरसमनुभ्योऽक्ष्णः ) पथिन् । इति शरदादिः ।

## तत्पु० स०

*सप्तमी शौण्डैः* । शौण्ड धूर्त कितव व्याड प्रवीण संवीन अन्तर अधि पटु पण्डित कुशल चपल निपुण इति शौण्डादिः ॥

*ऊर्यादिच्विडाचश्च* । ऊरी उररी कन्थी ताली आताली वेताली धूली धूसी शकला संकला ध्वंसकला भ्रंसकला गुलुगुधा सजूः फलू फली विक्ली आक्ली आलोष्टी केवाली कवासी सेवासी पर्याली शेवाली अत्पूमनसा वशमसा भस्मसा मस्मसा श्रौषट् वौषट् वषट् स्वाहा स्वधा वन्धा प्रादुस् एते ऊर्यादयः ।

## तद्धिते ।

*अश्वपत्यादिभ्यश्च* । अश्वपति स्थानपति ज्ञानपति यज्ञपति बन्धुपति शतपति धनपति राष्ट्रपति कुलपति गृहपति पशुपति भाग्यपति धर्मपति धन्वपति सभापति प्राणपति क्षेत्रपति इत्यश्वपत्यादिः ।

*उत्सादिभ्योऽञ्* । उत्स उदपान विकिर विनद महानद महानस् महाप्राण तरुण तलुन वष्कयास धेनु पृथ्वी पंक्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्मपीलु कुण पृष्ठदश मल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरुपञ्चाल इन्द्रावरुण उष्णीह ककुभसुवर्ण देवपोष्मादू छन्दसि । इत्युत्सादिः ।

*शिवादिभ्योऽण्* । शिव प्रोष्ठ प्रोष्ठक चण्ड जम्भ भूरि दण्ड कुठार ककुभ ( ककुभा ) अनभिम्लान लोहित सुख संधि मुनि ककुत्स्थ कहोड कोहड कहुय कहय रोध कपिञ्जल (कुपिञ्जल) वतण्ड तृण कर्ण क्षीरहृद जलहृद परिल ( पथिक ) पिष्ट हैहय ( पापकि ) गोपिका कपिलिका जटिलिका इत्यादि ।

रेवती अश्वपाली मणिपाली द्वारपाली वृकपाली वकग्राह दण्डग्राह कर्णग्राह चामरग्राह। इति रेवत्यादिः।

भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणाभूत विषय श्रोत्र इति भिक्षादिः।

क्रमक पदक शिक्षक मीमांसक। इति क्रमादिः।

वरणा भृगो शाल्मली शुण्डी शुयाण्टी ताम्रपर्णी गोदा अलिङ्ग्यायनी जानपदी जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती। इति वरणादिः।

यव दल्भि ऊर्मि भूमि क्रमि क्रुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि (ध्रजि) ध्वजि निजि सिजि सञ्जि हरित् ककुद् मरुत् शरुत् इक्षु मधु। आकृतिगणोऽयं यवादिः।

नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शल्वा दार्वा सेतकी (वडवाया वृषे) इति नद्यादिः।

गृह अन्तस्थ सम विषम (मध्यमध्यं दिनचरणे) उत्तम गर्वग भूगर्भ पूर्वपक्ष अपरपक्ष अधमशाख समानग्राम एकवृक्ष एकपलाश अवस्यन्दन कामप्रस्थ सौमित्रि व्याडिइत्यादि। आकृतिगणोऽयम्। इति गहादिः।

दिक् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्तमुख जघन मेघ यूथ (उदकात्संज्ञायाम्) न्याय वंश वेश काल आकाश इति दिगादिः।

अनुशतिक अङ्गारवेणु असिहत्य बध्योग पुष्करसत् कुरुकत् उदकशुद्ध इहलोक सर्वपुरुष प्रयोग परस्त्री राजपुरुषात्ष्यञि सूत्रनड आकृतिगणोऽयम्। तेन अनुहोढ अनुसंवरण इत्यादयोऽन्येऽपि इत्यनुशतिकादिः।

गो हविस् अक्षर विष विष बर्हिष् अष्टका स्खदा युग मेधा स्रुच् (नाभिनभं) (शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्) (ऊधसोऽनङ्च) कूप् खद दर खुर असुर अध्वनक्षरवेदः। इति गवादिः।

दण्ड मुसल मधु कशा अर्घ मेघ मेधा सुवर्ण उदक वध युगगुहा भाग इभ भङ्ग इति दण्डादिः।

लोमम् रोमन् वभ्र अरि गिरि कर्क कपि मुनि तरु इतिलोमादिः।

पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रुवलि सामन् ऊष्मन् कृमि। (अङ्गात्कल्याणे) (शाकपलाली तद्रूणां ह्रस्वत्वं च) (विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च) इति पामादिः।

(पिच्छा उरस् ध्रुवक ध्रुवक जटा घटा कालाक्षेपे) रण उदक पङ्क प्रज्ञा इति पिच्छा-

व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चमन् कमन् दंष्ट्रा संष्टा वडवा कुमारी नौचीणा वलाका यवखदा इति व्रीह्यादिः ।

अर्शस् तुन्द चतुर पलित जटा घटा घाटा अध कर्दम अम्ल लवण ( स्वाङ्गाद्धीनात् ) ( वर्णात् ) अर्शआदिराकृतिगणः ।

"आद्यादिभ्य उपसंख्यानम्" । अयमेव सर्वविभक्तिस्तसिः । आदितः मध्यतः अन्ततः पार्श्वतः पृष्ठतः आकृतिगणोऽयम् । स्वरेण स्वरतः ।

"प्रज्ञादिभ्यश्च" । प्रज्ञ वणिज उशिज उष्णिज प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस् ( श्रोत्रशरीरे ) जुहुवत्कृष्णमृगे ) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् असुर रक्षस् पिशाच अशनि कार्षापणम् देवता बन्धु इति प्रज्ञादिः ।

## स्त्रीप्रत्यये०

अजाद्यतष्टाप् । अज एडक अश्व चटक मूषिक वाल वत्स होढ पाक मन्द विलात पूर्वापहाण उत्तरापहाण क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा मध्यमेति पुंयोगेऽपि कोकिलाजातौ, दंष्ट्रा एतेऽजादयः । आकृतिगणोऽयम् ।

षिद्गौरादिभ्यश्च । गौर मत्स्य मनुष्य श्रृङ्ग पिङ्गल हय गवय मुकय ऋष्य ( पूट तुण ) द्रुण हरिण कोकय ( काकण ) पटर उणक ( आमल ) आमलक कुवल बिम्ब बदर फर्करक ( कर्कर ) तर्करि सर्करि पुष्कर पिषण्ढ सलद शष्कण्ड सनन्द सुषम सुपव अलन्द गडुल पाण्डश आढक आनन्द अश्वत्थ इति गौरादिः ।

बह्वादिभ्यश्च । बहु पद्धति अञ्च अङ्कति अंहति शकटि शक्ति शस्त्र शारि वारि राति राधि इत्यादि आकृतिगणोऽयम् ।

नक्रोडादिबह्वचः । क्रोड नख खुर गोखा उखा शिखा वाल शफगुक आकृतिगणोऽयम् । तेन भगगल घोण नाल भुज गुद कर इति क्रोडादिः ।

शार्ङ्गरवाद्यञोङीन् । शार्ङ्गरव कापटव गाग्गलव ब्राह्मण वेद गौतम कामण्डलेय ब्रह्मणकृतेय आनिचेय आनिपेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य काव्य शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड भोगवत् गौरमत् एता संज्ञायाम् नृनरयोर्वृद्धिश्च । पुत्र इति शार्ङ्गरवादिः ।

इति गणपाठः समाप्तः ।

---

# अथ लघुसिद्धान्तकौमुदीस्थधातुपाठः।

भू सत्तायाम्।
अत सातत्यगमने।
षिध गत्याम्।
चिती संज्ञाने
शुच शोके
गद व्यक्तायां वाचि।
णद अव्यक्ते शब्दे।
टुनदि समृद्धौ।
अर्च पूजायाम्।
व्रज गतौ।
कटे वर्षावरणयोः।
गुपू रक्षणे।
क्षि क्षये।
तप सन्तापे
क्रमु पादविक्षेपे।
पा पाने।
ग्लै हर्षक्षये।
ह्वृ कौटिल्ये।
श्रु श्रवणे।
गम्लृ गतौ।
एध वृद्धौ।
कमु कान्तौ।
अय गतौ।
ष्विता वर्णे।
ञिमिदा स्नेहने।
ञिष्विदा स्नेहनमोचनयोः।
ञिक्ष्विदा चेत्येके।
रुच दीप्तावभिप्रीतौ च।
घुट परिवर्तने।
शुभ दीप्तौ।
क्षुभ संचलने।
णभ तुभ हिंसायाम्।
स्रंसु भ्रंसु ध्वंसु अवस्रंसने।
ध्वंसु गतौ।
स्रम्भु विश्वासे।
वृतु वर्तने।
दद दाने
त्रपूष् लज्जायाम्।
श्रिञ् सेवायाम्।
भृञ् भरणे
हृञ् हरणे।
धृञ् धारणे।
णीञ् प्रापणे।
डुपचष् पाके।
भज सेवायाम्।
यज देवपूजासङ्गतिकरणदानेषु।
वह प्रापणे

इति भ्वादयः।

अद भक्षणे।
हन हिंसागत्योः।
यु मिश्रणामिश्रणयोः।
या प्रापणे।
वा गतिगन्धनयोः।
भा दीप्तौ।
ष्णा शौचे।
श्रा पाके।
द्रा कुत्सायां गतौ
प्सा भक्षणे।
रा दाने।
ला आदाने।
दाप् लवने।
पा रक्षणे।
ख्या प्रकथने।
विद् ज्ञाने।
अस् भुवि।
इण् गतौ।
शीङ् स्वप्ने।
इङ् अध्ययने।
दुह प्रपूरणे।
दिह उपचये।
लिह आस्वादने।
ब्रूञ् व्यक्तायां वाचि
ऊर्णुञ् आच्छादने।

इत्यदादयः।

हु दानादनयोः।
ञिभी भये।
ह्री लज्जायाम्।
पॄ पालनपूरणयोः।
ओहाक् त्यागे।
ओहाङ् गतौ।
डुभृञ् धारणपोषणयोः।
डु दाञ् दाने
डु धाञ् धारणपोषणयोः।
णिजिर् शौचपोषणयोः।

इति जुहोत्यादयः।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु।
षिवु तन्तुसन्ताने।
नृती गात्रविक्षेपे।
त्रसी उद्वेगे।
शो तनूकरणे।
छो छेदने।
षोऽन्तकर्मणि।
दोऽवखण्डने।
व्यध ताडने।
पुष पुष्टौ।
शुष शोषणे।
णश अदर्शने।
षूङ् प्राणिप्रसवे।
दूङ् परितापे।
डीङ् क्षये।
दीङ् विहायसा गतौ।
पीङ् पाने।
माङ् माने।
जनी प्रादुर्भावे।
दीपी दीप्तौ।

पद गतौ ।
विद् सत्तायाम् ।
बुध अवगमने ।
युध सम्प्रहारे ।
सृज विसर्गे ।
मृष तितिक्षायाम् ।
णह बन्धने ।

इति दिवादयः ।

षुञ् अभिषवे ।
चिञ् चयने ।
स्तृञ् आच्छादने ।
धूञ् कम्पने ।

इति स्वादयः ।

तुद व्यथने ।
भ्रस्ज पाके ।
कृष विलेखने ।
मिल सङ्गमे ।
मुच्लृ मोचने ।
लुप्लृ छेदने ।
विदॢ लाभे ।
षिच् क्षरणे ।
लिप उपदेहे ।
कृती छेदने ।
खिद परिघाते ।
पिश अवयवे ।
ओ व्रश्चू छेदने ।
व्यच व्याजीकरणे ।
उछि उञ्छे ।
ऋच्छ गतीन्द्रियप्रलय-
मूर्त्तिभावेषु
उज्झ उत्सर्गे ।
लुभ विमोहने ।
तृप् तृम्फ तृप्तौ ।
मृड् पृड् सुखने ।
शुनु गतौ ।
इषु इच्छायाम् ।
कुट कौटिल्ये ।
पुट् संश्लेषणे ।
स्फुट विकसने ।
स्फुर स्फुल संचलने ।
णू स्तवने ।
टुमस्जो शुद्धौ ।
रुजो भङ्गे ।
भुजो कौटिल्ये ।
विश प्रवेशने ।
मृश आमर्शने ।
षद्लृ विशरणगत्यवसादनेषु
शद्लृ शातने ।
कॄ विक्षेपे ।
गॄ निगरणे ।
प्रच्छ ज्ञीप्सायाम् ।
मृङ् प्राणत्यागे ।
जुषी प्रीतिसेवनयोः ।

इति तुदादयः

रुधिर् आवरणे ।
भिदिर् विदारणे ।
छिदिर् द्वैधीकरणे ।
युजिर योगे ।
रिचिर् विरेचने ।
विचिर् पृथग्भावे ।
क्षुदिर् सम्पेषणे ।
उच्छृदिर् दीप्तिदेवनयोः
उतृदिर् हिंसानादरयोः ।
कृती वेष्टने ।
तृह हिंसि हिंसायाम् ।
उन्दी क्लेदने ।
अञ्जू व्यक्तिम्रक्षणका-
न्तिगतिषु ।
तञ्चू संकोचने ।
ओविजी भयचलनयोः ।
शिष्लृ संचूर्णने ।
भञ्जो आमर्दने ।
भुज पालनाभ्यवहारयोः ।
ञि इन्धी दीप्तौ ।
विद् विचारणे ।

इति रुधादयः

तनु विस्तारे ।
षणु दाने ।
क्षणु हिंसायाम् ।
क्षिणु च ।
तृणु अदने ।
डुकृञ् करणे ।
मनु अवबोधने ।

इति तनादयः ।

डुक्रीञ् द्रव्यविनिमये ।
प्रीञ् तर्पणे कान्तौ च ।
श्रीञ् पाके ।
मीञ् हिंसायाम् ।
षिञ् बन्धने ।
स्कुञ् आप्लवने ।
युञ् बन्धने ।
क्नूञ् शब्दे ।
दृञ् हिंसायाम् ।
दूडञ् हिंसायाम् ।
पूञ् पवने ।
लूञ् छेदने ।
स्तॄञ् आच्छादने ।
कॄञ् हिंसायाम् ।
वृञ् वरणे ।
धूञ् कम्पने ।
ग्रह उपादाने ।
कुष निष्कर्षे ।
अश भोजने ।
मुष स्तेये ।
ज्ञा अवबोधने ।
वृङ् सम्भक्तौ ।

इति क्र्यादयः

चुर स्तेये ।
कथ वाक्यप्रबन्धे ।
गण सङ्ख्याने ।

इति चुरादयः

घट चेष्टायाम् ।
ज्ञप ज्ञाने ज्ञापने च ।



इति ण्यन्तप्रक्रिया । इति धातुपाठः समाप्तः ।

वर्णसमाम्नायस्थान्त्येत्संज्ञकवर्णजन्मनामष्टाध्यायीव्यवहृता-
नाम्प्रत्याहाराणां कोष्ठकानि ।

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अट् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अण् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

स्वराणामष्टादशभेदज्ञापकम् ।

| अक्षराणि | अ इ उ ऋ ऌ | | अ इ उ ऋ ऌ ए ओ ऐ औ | | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|---|---|---|
| १ | ह्रस्वोदात्तानुनासिकः | ७ | दीर्घोदात्तानुनासिकः | १३ | प्लुतोदात्तानुनासिकः |
| २ | ह्रस्वोदात्ताननुनासिकः | ८ | दीर्घोदात्ताननुनासिकः | १४ | प्लुतोदात्ताननुनासिकः |
| ३ | ह्रस्वानुदात्तानुनासिकः | ९ | दीर्घानुदात्तानुनासिकः | १५ | प्लुतानुदात्तानुनासिकः |
| ४ | ह्रस्वानुदात्ताननुनासिकः | १० | दीर्घानुदात्ताननुनासिकः | १६ | प्लुतानुदात्ताननुनासिकः |
| ५ | ह्रस्वस्वरितानुनासिकः | ११ | दीर्घस्वरितानुनासिकः | १७ | प्लुतस्वरितानुनासिकः |
| ६ | ह्रस्वस्वरिताननुनासिकः | १२ | दीर्घस्वरिताननुनासिकः | १८ | प्लुतस्वरिताननुनासिकः |

## आभ्यन्तरबाह्यप्रयत्नज्ञानार्थं कोष्ठकम् ।

| बाह्याः | विवार श्वास अघोष अल्पप्राण | विवार श्वास अघोष महाप्राण | | संवार, नाद, घोष, अल्पप्राण | | | | संवार, नाद, घोष, महाप्राण | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | उदात्त, अनुदात्त स्वरित | | | | |
| अक्षराणि | क च ट त प | ख छ ठ थ फ | श ष स | ग ङ ज ञ ड ण द न ब म | अ | इ ए उ ओ ऋ ऐ ऌ औ | य र ल व | घ झ ढ ध भ | ह |
| आभ्यन्तर प्र | स्पृष्ट | | ईषद्विवृत | स्पृष्ट | संवृत | विवृत | ईषत्स्पृष्ट | स्पृष्ट | ईषद्विवृत |

## वर्णस्थानानि ।

| | | |
|---|---|---|
| अ | क ख ग घ ङ ह ः | कण्ठः. |
| इ | च छ ज झ ञ य श | तालु. |
| ऋ | ट ठ ड ढ ण र ष | मूर्धा. |
| ऌ | त थ द ध न ल स | दन्ताः. |
| उ | प फ ब भ म ᳶप | ओष्ठौ. |
| | ञ म ङ ण न | नासिका. |
| ए ऐ | | कण्ठ तालु. |
| ओ औ | | कण्ठोष्ठम्. |
| व | | दन्तोष्ठम्. |
| ᳵक | | जिह्वामूलम्. |
| ं | | नासिका. |

# लघुसिद्धान्तकौमुदीविषयानुक्रमः ।





इत्यनुक्रमः ।

Ballabh Das

❀ श्रीः ❀

# लघुसिद्धान्तकौमुदी ।

श्रीगणेशाय नमः ।

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

## अथ संज्ञाप्रकरणम् ।

**अइउण् १ ऋलृक् २ एओङ् ३ ऐऔच् ४ हयवरट् ५**

---

नत्वेति । णम् प्रह्वत्वे शब्दे इत्यस्माद्धातोः ( समानकर्तृकयोः पूर्वकाले ) इति सूत्रेण क्त्वाप्रत्यये रूपम् । उत्कृष्टनिष्ठं यत् स्वनिष्ठापकृष्टत्वबोधनं तदनुकूलः कर-शिरःसंयोगरूपव्यापारो नमधात्वर्थः । **सरस्वतीमिति** । सरो विद्यास्थानमस्त्यस्य । इति सरस्वती ताम् । **देवीमिति** । दीव्यति प्रलये सर्वान् स्वस्यां निवेश्य क्रीडतीति देवी ताम् । पचादिषु देवट्शब्दपाठात् ततो ङीपि रूपम् । **शुद्धामिति** । शुद्धस्व-रूपां निर्दुष्टामिति यावत् । **गुण्यामिति** । गुणत्रयमध्ये प्रशस्त ( सत्त्व ) गुणवती-मित्यर्थः । उक्तविशेषणद्वयं ग्रन्थपक्षेऽपि योज्यम् । तथा हि—शुद्धां काठिन्यादि-दोषशून्यामित्यर्थः । गुण्यां शब्दव्युत्पादनाद्युत्कर्षयुक्तामित्यर्थः । **करोमीति** । डुकृञ् करणे अस्मात्कर्तरि लटि रूपम् । उत्पत्त्यनुकूलव्यापारो हि कृधात्वर्थः । **पाणिनीयेति** । पाणिनिना प्रोक्तं पाणिनीयं तत्र प्रवेशस्तस्मै । पाणिनिप्रणीतमहा-व्याकरणे बालानां झटिति बुद्धिप्रवेशार्थमित्यर्थः । **लघुसिद्धान्तेति** । मोदत इति मुदः कोर्मुदः कुमुदश्चन्द्रस्तस्येयं ज्योत्स्ना कौमुदी लघ्वी चासौ सिद्धान्तकौमुदी चेति ताम् । अत्यल्पाम् ( संक्षिप्तामप्यनेकशब्दसिद्धान्तार्थप्रकाशजनिकामित्यर्थः । **हयवरडिति** । अट् अश् हश् इण् प्रत्याहारेषु हकारग्रहणार्थोऽत्र हकारोपदेशः । अटि हकारोपदेशप्रयोजनं तु—अर्हेणेत्यत्र "अड्व्यवायेऽपीति" सूत्रेण णत्वसिद्धिः ।

ण्, ६ अमङणनम् ७ झभञ् ८ घढधष् ९ जबगडदश् १०
खफछठथचटतव् ११ कपय् १२ शषसर् १३ हल् १४

इति माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारा-

---

अशि हकारोपदेशप्रयोजनं देवा हसन्तीत्यत्र "भो भगो" इत्यच्निमित्तकं रोर्यत्वम्, हशि हकारोपदेशप्रयोजनं देवो हसतीत्यत्र "हशि च" इत्युत्वं च। इणि हकारोपदेशप्रयोजनं लिलिहिढ्वे, लिलिहिध्वे इत्यत्र "विभाषेटः" इत्यनेन वैकल्पिकढत्वसिद्धिः । लणिति । "अइउण्" इत्यत्र णकारानुबन्धेनैवाऽणादिप्रत्याहारसिद्धौ पुनरिह णकारानुबन्धो व्यर्थ इति नाशंक्यम् । 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इतिपरिभाषाज्ञापकत्वेन तस्य सार्थक्यात् । हलिति । "हयवरट्" इत्यत्र हकारोपदेशेनैव सिद्धौ पुनरेह हकारोपदेशो व्यर्थ इति नाशक्यम्, वल् रल् झल् शल् प्रत्याहारेषु हकारग्रहणार्थत्वेनास्य हकारोपदेशस्य सार्थक्यात् । तथा हि— वलि हकारोपदेशप्रयोजनं—रुदिहि स्वपिहि, अत्र "रुदादिभ्यः सार्वधातुके" इति वलादिलक्षणस्येटः सिद्धिः । रलि हकारोपदेशप्रयोजनं, स्निहित्वा स्नेहित्वा, अत्र "न क्त्वासेट्" इति निषेधशास्त्रं बाधित्वा "रलो व्युपधाद्धलादेः संश्च" इत्यनेन वैकल्पिककित्वविधानादुक्तरूपद्वयसिद्धिः । झलि हकारोपदेशप्रयोजनम्—अदाग्धामित्यत्र घत्वस्यासिद्धत्वेन हकारस्य झल्त्वात् "झलो झलि" इति सलोपरूपम् । शलि हकारोपदेशप्रयोजनम्—अलिक्षदित्यत्र "शल इगुपधादनिटः क्सः" इति च्लेः क्सादेशरूपम् ॥ इति माहेश्वराणीति । महाँश्चासावीश्वरो महेश्वरः शिवस्तस्मादागतानि माहेश्वराणि (महेश्वरशब्दात् "तत आगत" इति सूत्रेण तद्धिताऽण्प्रत्यये माहेश्वरशब्दो निष्पन्नः) । अण् आदिर्यासां ता अणादयो द्विचत्वारिंशत्संज्ञास्ता एवार्थः प्रयोजनं येषां तान्यणादिसंज्ञार्थानि । इतीमानि माहेश्वराणि माहेश्वरादागतानि पाणिनिमुनिलब्धानि सूत्राणि चतुर्दशसंख्यकानि अणादिसंज्ञार्थानि अणादिसंज्ञासिद्धिप्रयोजकानि सन्तीत्यर्थः । एषां चतुर्दशसूत्राणां प्रणेता न महेश्वरो नापि पाणिनिः किन्तु ताण्डवनृत्यकाले प्रसन्नीभूतस्य महेश्वरस्य डमरोः सकाशादुत्पन्नानां तेषां पाणिनेराकर्णनद्वारा लाभः । अत एषामनादित्वादेतन्मूलकस्य पाणिनिप्रणीतव्याकरणस्यैव वेदाङ्गत्वमित्यवसेयम् । तथा च शिक्षावचनम्—'नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्' ॥ इति ॥ एषामिति । एषां

दिष्वकार उच्चारणार्थः, लण्मध्ये त्वित्संज्ञकः ॥

## हलन्त्यम् १ । ३ । ३

उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥

## अदर्शनं लोपः १ । १ । ६०

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ।

## तस्य लोपः १ । ३ । ९

---

चतुर्दशसूत्राणामन्त्या अन्ते भवा ण् क् ङादयो वर्णा इत इत्संज्ञकाः सन्तीत्यर्थः । हकारादिष्विति । हकारादिषु हयवरडित्यादिसूत्रघटकहकारादिवर्णेषु योऽकारः स उच्चारणार्थस्तस्य हकारादिवर्णानामुच्चारणमेव प्रयोजनं नत्वसौ ग्रहणार्थ इति । नाचं विना व्यञ्जनस्योच्चारणमपि भवतीति भाष्योक्तोरिति भावः । लण्मध्येत्विति । लण्सूत्रघटकोऽकार इत्संज्ञको रप्रत्याहारसिध्यर्थमिति शेषः । रप्रत्याहारसिद्धौ ( उरण् रपरः ) इत्यत्र रेफेण रेफलकारोभयवर्णग्रहणे ऋकारस्थानिकावरारौ लृकारस्थानिकावलालौ चादेशा भवन्तीति बोध्यम् । हलन्त्यमिति । सूत्रमिदमावृत्त्या द्विरुपात्तं बोध्यम् । सकृदुपादाने वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वाद्धलन्त्यमित्यस्य वाक्यार्थबोधे इत्पदार्थज्ञानस्यावश्यकत्वात्तदर्थमादिरन्त्येनेत्यस्य वाक्यार्थबोधोऽपेक्षितोऽस्यापि वाक्यार्थबोधे इत्पदार्थज्ञानाय हलन्त्यसूत्रस्य वाक्यार्थबोधोऽपेक्षित इत्यनयोः परस्परापेक्षत्वरूपान्योन्याश्रयस्य जायमानत्वादेकस्यापि वाक्यार्थबोधो न स्यादित्यावृत्तिः स्वीकार्या । प्रमाणं चात्र "न विभक्तौ" इति सूत्रमेवेति बोध्यम् । उपदेश आद्योच्चारणमिति । आद्यानां शिवपाणिनिप्रभृतीनामुच्चारणमुपदेशः । अथवा, आद्यञ्च तदुच्चारणञ्चेत्याद्योच्चारणम् प्रथममुच्चारणमित्यर्थः । शिवपाणिनिप्रभृतीनामिति शेषः । तथा च—शिवपाणिनिप्रभृतीनामाद्यमुच्चारणमुपदेशः । केचित्तु–'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्' । 'आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः' ॥ इत्याहुः । तन्न । एषामुपदेशसंज्ञाया मनोरमाकृता बहुयुक्त्या खण्डितत्वात् । तत्खण्डनप्रकारश्च तत एवावगन्तव्यः । प्रसक्तस्येति । शास्त्रतोऽर्थतश्च प्रसक्तस्य प्राप्तोच्चारणस्येत्यर्थः । दर्शनसामान्यार्थकत्वात्तस्य च निषेधाऽसम्भवादुच्चारणसत्ताया एव निषेध इति भावः ।

नस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः ।

**आदिरन्त्येन सहेता १ । १ । ७१**

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथाऽणिति अइउवर्णानां संज्ञा । एवमक् अच् हल् अलित्यादयः ।

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः १ । २ । २७**

उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ।

**उच्चैरुदात्तः १ । २ । २९**

ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ।

**नीचैरनुदात्तः १ । २ । ३०**

ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ।

**समाहारः स्वरितः १ । २ । ३१**

उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच्स्वरितसंज्ञः स्यात् । स नवविधोऽपि प्रत्येकमनुनासिकानुनासिकत्वाभ्यां द्विधा ।

**मुखनासिकावचनोऽनुनासिकः १ । १ । ८**

---

णादयोऽणाद्यर्था इति । अण् आदिर्येषां तेऽणादयस्तेऽर्थाः प्रयोजनं येषां तेऽणाद्यर्थाः । णादयो णकारप्रभृतयोऽनुबन्धवर्णा अणाद्यर्थाः अणादिप्रयोजका इत्यर्थः । ऊकाल इति । उश्च ऊश्च ऊ३श्च वः । वः कालो यस्य स ऊकालः । अत्र ऊशब्दः स्वोच्चारणकालसादृश्ये लाक्षणिकम् । ह्रस्वदीर्घप्लुत इत्यत्र समाहारद्वन्द्वः । सौत्रत्वात्पुंस्त्वम् । वर्णसमाम्नायेऽकारस्य प्राथम्यादुकारस्याऽतथात्वात्तद्घटितसूत्रमयुक्तमिति नाऽऽशङ्कनीयम् । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादीनामनुक्तेः । एकद्वित्रिमात्रिकोकाराणामुच्चारणकालसदृशोच्चारणकालविशिष्टोऽच् क्रमशो ह्रस्वदीर्घप्लुतसञ्ज्ञको भवतीति सूत्रार्थः । स नवविधोऽपीति । स ह्रस्वादिसंज्ञकोऽच् नवविधोऽपि उदात्तादिभेदेन नवप्रकारोऽपि प्रत्येकमेकैकशोऽनुनासिकाननुनासिकत्वाभ्यां धर्माभ्यां द्विधा, द्विविधोऽनुनासिको निरनुनासिकश्चेत्यर्थः । इत्थं हि नवप्रकारः— "ह्रस्वोदात्तः" "ह्रस्वानुदात्तः" "ह्रस्वस्वरितः" "दीर्घोदात्तः" "दीर्घानुदात्तः" "दीर्घस्वरितः" "प्लुतोदात्तः" "प्लुतानुदात्तः" "प्लुतस्वरितः" । मुखनासिकेति

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादशभेदाः । ऌवर्णस्य द्वादश, तस्य दीर्घाभावात् । एचामपि द्वादश, तेषां ह्रस्वाभावात् ।

## तुल्यास्यप्रयत्नं सवर्णम् १ । १ । ९

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । ( ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्र-

---

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावापत्तिरतो मध्यमपदलोपिसमासो बोध्यः । तथा हि—मुखेनोपसहिता नासिका मुखनासिका उच्यतेऽसौ वचनः, मुखनासिकया वचनो मुखनासिकावचनः । नासैव नासिका तामनुगतोऽनुनासिकः । तदित्थमिति । "ऊकाल" इत्यादिसूत्रपञ्चकायत्फलितं तदित्थमित्यर्थः । एचामपीति । एच्प्रत्याहारस्थवर्णानाम् 'ए ओ ऐ औ' इत्येतेषामित्यर्थः । तुल्यास्येति । तोलनं तुला तुलया संमितं तुल्यम् आस्ये भवमास्यं, तुल्यञ्च तुल्यश्च तुल्ये आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्यावास्यप्रयत्नौ यस्य तत् तुल्यास्यप्रयत्नम् । सूत्रे आस्यशब्दः ताल्वादिस्थानबोधकः प्रयत्नशब्दश्चाऽऽभ्यन्तरप्रयत्नबोधकः । तथाच—यस्य वर्णद्वयस्य ताल्वादिस्थानाऽऽभ्यन्तरप्रयत्नौ सदृशौ स्तस्तद्वर्णद्वयं मिथः सवर्णसंज्ञकमिति सूत्रस्य निष्कर्षः । ऋऌवर्णयोरिति । ऋ च ऋ च रलौ तौ च तौ वर्णौ ऋऌवर्णौ तयोस्तथोक्तयोः । ऋश्च ऌल् च ऋलौ तयोर्वर्णयोः ऋऌवर्णयोः, प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रहस्य सिद्धान्तात् । दीर्घो नात्र शङ्क्यः । "ऋत्यक" इति प्रकृतिभावविधानात् । अकुहेति । अत्र कुशब्देन क ख ग घ ङ इतिवर्णपञ्चकस्य ग्रहणम् । एवमग्रेचुटुतुपुशब्देभ्योऽपि तत्तद्वर्गस्थवर्णपञ्चकस्य तत्र तत्र ग्रहणम्बोध्यम् । नासिकाचेति । अत्र चशब्देन स्वस्ववर्गानुकूलस्य ताल्वादेः स्थानस्य समुच्चयः । जिह्वामूलीयस्येति । कखाभ्यां प्रागर्धविसर्गसदृशस्येत्यर्थः । यत्न इति । यत्नशब्दोऽत्र प्रयत्नार्थको बोध्यः । स्पृष्टेति । वर्णोच्चारणे कण्ठाद्यवयवेषु जिह्वाग्रादीनां पूर्णस्पर्शे स्पृष्टप्रयत्नः । वर्णोच्चारणे जिह्वाग्रादीनामत्यल्पस्पर्शे ईषत्स्पृष्टप्रयत्नः । उच्चारणकालेऽवयवानामत्यल्पविवृतावीषत्प्रयत्नः । सम्यक् विवृतौ

स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ≍क≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍प≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनुस्वारविसर्गौ ॥

## अणुदित्सवर्णस्य चाऽप्रत्ययः १ । १ । ६९

प्रतीयते विधीयते इति प्रत्ययः । अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाऽण् परेण णकारेण । कु चु टु तु पु एते उदितः । तदेवम्—अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌकारोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा ॥

## परः सन्निकर्षः संहिता १ । ४ । १०९

---

विवृतप्रयत्नः । वर्णोच्चारणेऽवयवानां सङ्कोचतत्त्वं संवृतप्रयत्नः । स्पर्शानामिति । कादिमपर्यन्तानामित्यर्थः । अन्तःस्थानामिति । यरलवानामित्यर्थः । ऊष्मणामिति । शषसहवर्णानामित्यर्थः । प्रयोगे इति । वाक्ययोजनादशायामित्यर्थः । प्रक्रियादशायामिति । साधनावस्थायामित्यर्थः । बाह्येति । वर्णोत्पत्त्यनन्तरजातो यत्नो बाह्यप्रयत्न इत्युच्यते । खर इति । खरः खफछठथचटतकपशषसाः वर्णा इत्यर्थः । विवारा इति । विवारप्रयत्नवन्त इत्यर्थः । यण इति । यरलवा इत्यर्थः । शल इति । शषसहा इत्यर्थः । अच इति । अच्प्रत्याहारस्था वर्णा इत्यर्थः । स्वरा इत्युच्यन्ते । अणुदिति । अत्राऽप्रत्ययपदमादेशादौ सवर्णग्रहणवारणार्थकम् । अप्रत्ययपदस्यैवाऽविधीयमान इत्यर्थः । अविधीयमान इतिपदमण एव विशेषणं नतूदिदित्यस्यापि । अविधीयमानोऽण् सवर्णबोधकः, उदितो विधीयमानस्यापि सवर्णबोधकत्वमित्यर्थः । अत्रैवाणिति । अस्मिन्नेव सूत्रे परणकारेणाऽण्प्रत्याहारग्रहणं नान्यत्रेत्यर्थः । अत्र च व्याख्यानमेव प्रमाणं तच्चेह विस्तरभयान्न प्रपञ्चितम् । तदुक्तं भाष्यकृता—'पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः' । 'ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु' ॥ परः सन्निकर्षः । सूत्रे परशब्दोऽतिशयवाचकः । सन्निकर्षशब्दश्च सान्निध्यवाचकः । सान्निध्यं च व्याकरणे वर्णानामेव गृह्यते । तदाह वृत्तौ

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥

## हलोऽनन्तराः संयोगः १ । १ । ७

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥

## सुप्तिङन्तं पदम् १ । ४ । १४

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥

इति संज्ञाप्रकरणम् ॥

# अथाच्सन्धिप्रकरणम् ।

## इको यणचि ६ । १ । ७७

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य १ । १ । ६६

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥

## स्थानेऽन्तरतमः १ । १ । ५०

प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ॥

---

वर्णानामतिशयित इत्यादि । संहिता च स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायशून्यरूपा । अज्भिरिति । स्वरसंज्ञकवर्णैर्व्यवधानशून्या हल्वर्णाः संयोगसंज्ञका भवन्तीत्यर्थः । सुप्तिङन्तमिति । सुप् च तिङ् च सुप्तिङौ तावन्ते यस्य तत्सुप्तिङन्तम् । सुप्तिङोः प्रत्ययत्वात् 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदन्तविधौ सुप्तिङ्पदाभ्यामेव सुबन्ततिङन्तरूपार्थलाभे सूत्रेऽन्तग्रहणं व्यर्थमिति चेन्न । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषाज्ञापनार्थत्वेन सार्थक्यादिति बोध्यम् । "इको यणचि" । इकः स्थानषष्ठीत्वात् (षष्ठीस्थाने योगा) इति परिभाषया स्थानार्थलाभस्तदाह—इकः स्थान इति । संहितायामित्यधिकारः । इकामुच्चारणप्रसङ्गे यणामुच्चारणं कर्तव्यमित्यर्थः । वर्णान्तरेणेति । अन्यवर्णेनेत्यर्थः । अव्यवहितस्येति । व्यवधानशून्यस्येत्यर्थः । "स्थानेऽन्तरतमः" । अत्र स्थानशब्दः प्रसङ्गार्थकः सतिसप्तम्यन्तश्च । अन्तरतमशब्दश्च सादृश्यार्थकस्तथाच प्रसङ्गे सतीत्यायर्थलाभः । "षष्ठी स्थाने योगे" त्यतः स्थानेग्रहणानुवृत्त्यैवोक्तार्थलाभे स्थानेग्रहणं (यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः) इति परिभाषा-

### अनचि च ८ । ४ । ४७

अचोऽ स्य यरो द्वे वा स्तो न त्वचि ॥

### झलां जश् झशि ८ । ४ । ५३

स्पष्टम् । इति धकारस्य दकारः ॥

### संयोगान्तस्य लोपः ८ । २ । २३

संयोगान्तं यत्पदं तस्य लोपः स्यात् ॥

### अलोऽन्त्यस्य १ । १ । ५२

षष्ठीनिर्दिष्टोऽन्त्यस्यादेशः स्यात् । इति यलोपे प्राप्ते ( यणः प्रतिषेधो वाच्यः ) सुद्ध्युपास्यः ।

मद्ध्वरिः । धात्त्रंशः । लाकृतिः ॥

### एचोऽयवायावः ६ । १ । ७८

एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥

### यथासंख्यमनुदेशः समानाम् १ । ३ । १०

समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ॥

### वान्तो यि प्रत्यये ६ । १ । ७९

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् ॥

---

ज्ञापनार्थमिति बोध्यम् । जातिपक्षे स्थान्यादेशयोः समसंख्यकत्वेन यथासंख्यसूत्रेण निर्वाहेऽपि व्यक्तिपक्षे प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणेति इक्शब्देन षट्षष्ट्येर्ग्रहणाद्यण्शब्देन च सप्तानामिति यथासंख्यसूत्रेणानिर्वाहात् "स्थानेऽन्तरतम" इति सूत्रस्योपयोग इति बोध्यम् । "अनचिच" । "अचो रहाभ्याम्"इति सूत्राद्वे द्वे इति पदद्वयं "यरोऽनुनासिक" इति सूत्रात् यरो वेति पदद्वयञ्चानुवर्तते तदाह— **अचः परस्येत्यादि** । अच् प्रत्याहारः । यर् च प्रत्याहारः । **संयोगान्तमिति** । हल्समुदायो हि संयोगस्तस्यान्तमित्यर्थः । **षष्ठीनिर्दिष्ट इति** । षष्ठीविभक्तिप्रत्ययनिर्दिष्ट इत्यर्थः । तथा च सूत्रस्यायमर्थः–षष्ठीविभक्तिप्रत्ययनिर्दिष्ट आदेशोऽन्त्यस्यालः स्थाने भवतीति । **यकारादाविति** । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिलाभेन यकारादावित्यर्थः । **गव्यमिति** । गोर्विकारो गव्यम् । गोशब्दात् यत्प्रत्ययः । अत्र वलोपो नाशङ्कनीयः । सूत्रे वकारात्प्राक्

नाव्यम् । ( अध्वपरिमाणे च ) गव्यूतिः ॥

## अदेङ् गुणः १ । १ । २

अत् एङ् च गुणसंज्ञः स्यात् ॥

## तपरस्तत्कालस्य १ । १ । ७०

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणो वर्णस्समकालस्यैव संज्ञा स्यात ॥

## आद्गुणः ६ । १ । ८७

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥

## उपदेशेऽजनुनासिक इत् १ । ३ । २

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥

## उरण् रपरः १ । १ । ५१

ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥

## लोपः शाकल्यस्य ८ । ३ । १९

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ॥

---

वकारस्य प्रश्लेषेण श्रूयमाणवकारान्न आदेश इत्यर्थात् । अत्वन लोपवारणे तु "अध्वपरिमाणे च" इति वार्तिके चकारं प्रश्लिष्य गव्यूतिरित्यत्र वलोपो वारणीयः । **नाव्यमिति** । नावा तार्यं नाव्यम् । नौशब्दात् "नौवयोधर्म" इति तद्धितसूत्रेण यत्प्रत्ययः । **'अध्वपरिमाणे च'** । मार्गप्रमाणेऽर्थे ओतः स्थाने वान्तादेश इत्यर्थः । गव्यूतिरिति स्त्री क्रोशयुगस्य संज्ञा । तदुक्तं कोशे—'गव्यूतिः स्त्री क्रोशयुगम्' इति । **अदेङिति** । अ ए ओ इमे वर्णा गुणसंज्ञका इत्यर्थः । **तपर इति** । तपरपदे बहुव्रीहितत्पुरुषसमासद्वयं व्याख्यानात्तदाह—तःपरो यस्मात् स च तात्परश्चेति । **"आद्गुणः"** । "इको यणचि" इत्यतोऽचीत्यस्यानुवृत्तिः, "एकः पूर्वपरयोः" इत्यधिक्रियते तदाह—**अवर्णादचीत्यादि** । **उपेन्द्र इति** । उपगत इन्द्रमिति विग्रहे शाकपार्थिवादित्वात्समासः । इन्द्रस्य समीपमिति विगृह्याव्ययीभावे तु उपेन्द्रमिति स्यात् । **प्रतिज्ञानुनासिक्या इति** । पाणिनिप्रभृतिप्रोक्ता वर्णा आनुनासिक्यविषयकप्रतिज्ञावन्तो भवन्तीत्यर्थः । **"लोपः शाकल्यस्य"** । "ओतो गार्ग्यस्य" इत्यनेन विशेषरूपेणौकारान्ताल्लोपविधानात् नात्र भोभगो अघोशब्दानुवृत्तिः । "भोभगो" इति सूत्रादशीत्यस्य "व्योर्लघु" इति सूत्राद्व्योरित्यस्य चानुवृत्तिस्तदाह— **अवर्ण-**

## पूर्वत्रासिद्धम् ८ । २ । १

सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । हर इह, हरयिह । विष्ण इह, विष्णविह ॥

## वृद्धिरादैच् १ । १ । १

आदैच्च वृद्धिसंज्ञः स्यात् ॥

## वृद्धिरेचि ६ । १ । ८८

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

## एत्येधत्यूठ्सु ६ । १ । ८९

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति उपैधते । प्रष्ठौहः । एजाद्योः किम् ? उपेतः । मा भवान्प्रेदिधत् ( अक्षादूहिन्यामुपसंख्यानम् ) अक्षौहिणी सेना ( प्रादूहोढोढ्येषैष्येषु ) प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ( ऋते च तृतीयासमासे ) सुखेन ऋतः सुखार्तः । तृतीयेति किम् ? परमर्तः ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) प्रार्णम् । वत्सतरार्णमित्यादि ॥

## उपसर्गाः क्रियायोगे १ । ४ । ५९

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव् निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः ॥

---

पूर्वयोरित्यादि । "पूर्वत्राऽसिद्धम्" । अधिकारसूत्रमिदम् । अधिकारत्वं च स्वदेशे लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधजनकत्वाभाववत्त्वे सति उत्तरोत्तरसम्बन्धत्वरूपम् । अधिकारत्वे फलमाह—त्रिपाद्यामपीति । "वृद्धिरेचि" । "आद्गुणः" इत्यस्मात् आदित्यनुवर्तते । गुणापवाद इति । "आद्गुण" इति सूत्रेण प्राप्तस्य बाधक इत्यर्थः । "एत्येधत्यूठ्सु" । अत्र "वृद्धिरेचि" इतिसूत्रादनुवृत्तमेचीतिपदम् एत्येधत्योरेव विशेषणं नतु ऊठस्तस्यैजादित्वाऽसम्भवादित्यभिप्रायेणाह—एजाद्योरिति । सूत्रमिदं पररूपगुणयोर्बाधकम् । उपैति, उपैधत इति च रूपद्वयम् । इण् गतौ । एध वृद्धौ । अनयोः । अक्षौहिणीति । ऊहोऽस्यास्तीति ऊहिनी अक्षाणामूहिनीति विग्रहः । अक्षाणामूहोऽस्त्यस्या इति न विग्रहस्तथा सति अक्षोहिणीत्येव तत्रार्थवदूहिनीशब्दपरत्वाऽभावेन वृद्धेरप्राप्तेः । परमर्त इति । परमश्चासौ ऋतश्चेति विग्रहे कर्मधारयसमासः । प्रवत्सतरेति । अत्र वसनार्णेत्यत्र ऋणशब्दो नत्वर्ण-

**भूवादयो धातवः १ । ३ । १**

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥

**उपसर्गादृति धातौ ६ । १ । ९१**

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ॥

**एङि पररूपम् ६ । १ । ९४**

आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ॥

**अचोन्त्यादि टि १ । १ । ६४**

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) तच्च टेः । शकन्धुः कर्कन्धुः । मनीषा । आकृतिगणोऽयम् । मार्तण्डः ॥

**ओमाङोश्च ६ । १ । ९५**

ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायोन्नमः । शिव एहि ॥

**अन्तादिवच्च ६ । १ । ८५**

---

शब्दो बोध्यः । भूवादय इति । भूश्च वाश्च भूवौ आदिश्च आदिश्च आदी भूवौ आदी येषां ते भूवादयः । अत्रैक आदिशब्दो व्यवस्थावाचकोऽपरश्च प्रकारवाचकः । प्रकारश्च भेदसादृश्यं तेन भूप्रभृतयो वा सदृशा इत्यर्थः । सादृश्यञ्च क्रियावाचकत्व-धर्मेण तदाह—क्रियावाचिन इति । अत्र क्रियावाचिनोऽनुक्तौ याः पश्यसीत्यादौ धातुत्वापत्त्याऽऽकारलोपापत्तिः । भ्वादीत्यस्यानुक्तौ हिरुक् पृथक् इत्याद्यव्ययानां शिश्ये इति भावार्थतिङन्तस्य च धातुत्वापत्तिः । 'उपसर्गादृति धातौ' । "आद्गुण" इति सूत्रादादित्यनुवृत्तं विशेषणम् उपसर्गादिति सूत्रस्थं पदं विशेष्यं "येन विधिः" इति सूत्रेण विशेषणेन तदन्तविधिस्तदाह—अवर्णान्तादिति । "एङि पररूपम्" । अत्र सूत्रे ( एवे चानियोगे ) इति वार्तिकम् । अनियोगे एवशब्दः पररूप-विषयः, नियोगे एवशब्दो वृद्धिविषयः । तदुक्तम्—'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः' । 'एवस्तु विषयो वृद्धेर्नियमोऽयं यदा भवेत्' ॥ इति । आदिति । "आद्गुण" इत्यत आदित्यनुवर्तते । शकन्धुः । शकानां देशविशेषाणामन्धुः कूपः । कर्कन्धुः । कर्काणां राजविशेषाणामन्धुः कूपः । "अन्तादिवच्च" । एकादेशस्य पूर्वस्थानिघटितपूर्वसमुदाये परस्थानिघटितपरसमुदाये च यो धर्मः स एकादेशविशिष्टे पूर्वस्मिन् परस्मिंश्चातिदिश्यते एकदा पूर्वस्मिन् परस्मिन् वा पूर्वान्तवद्भा-

ङ् भे कादेशः स पूर्वस्यान्तवत् परस्यादिवत् स्यात् । शिवेहि ॥

अकः सवर्णे दीर्घः ६ । १ । १०१

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ॥

एङः पदान्तादति ६ । १ । १०९

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥

सर्वत्र विभाषा गोः ६ । १ । १२२

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात् पदान्ते । गो अग्रम् , गोऽग्रम् । एङन्तस्य किम् ? चित्रग्वग्रम् । पदान्ते किम् ? गोः ॥

अनेकाल् शित्सर्वस्य १ । १ । ५५ ।

इति प्राप्ते ॥

ङिच्च १ । १ । ५३

ङिदनेकालप्यन्तस्यैव स्यात् ॥

अवङ् स्फोटायनस्य ६ । १ । १२३

पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम् । पदान्ते किम् ? गवि ॥

---

वपरादिवद्भावेति व्यवहारद्वय न भवतीति बोध्यम् । शिवेहीति । शिव—आ—इहि इत्यत्र धातूपसर्गकार्यस्यान्तरङ्गत्वाद् गुणे तत ए इत्यस्य "अन्तादिवच्च" इति सूत्रेण पूर्वान्तवद्भावेनाऽऽङ्त्वात् "ओमाङोश्च" इति पररूपम् । "अकः सवर्णे दीर्घः" । "इको यणचि" इति सूत्रादचीत्यनुवर्तते । "एकः पूर्वपरयोः" इत्यधिक्रियते तदाह—अचि परे पूर्वपरयोरिति । अत्र लाघवात् अकोऽकि दीर्घ इत्येव सुवचम् । "सर्वत्र विभाषा गोः" । सर्वत्रेत्यस्य लोकवेदयोरित्यर्थः । एङः पदान्तादित्यतोऽनुवृत्तस्यैङ इति पञ्चम्यन्तस्य सूत्रस्थगोरिति षष्ठ्यन्तेन सामानाधिकरण्यानुरोधात्षष्ठ्यन्ततया विपरिणामः । तत एव सूत्रादतीति पदान्तादिति चानुवर्तते । विभक्तिविपरिणामात्पदान्तादित्यस्य पदान्त इत्यर्थः । "प्रकृत्यान्तः पादमव्यपरे" इत्यतः प्रकृत्या इति वर्तते तदाह—लोके वेदे चेति । प्रकृतिभाव इति । संहितायामपि पूर्ववत्स्थितिरित्यर्थः । "अनेकाल् शित्सर्वस्य" । अनेका अलो यस्यासावनेकाल् । श् इयस्यासौ शित् । "ङिच्च" ङ् इयस्यासौ ङित् । उक्तसूत्राऽपवादोऽयम् । "अवङ् स्फोटायनस्य" । स्फोटोऽयनं यस्य स स्फोटायनः स्फो-

इन्द्रे च ६ । १ । १२४

गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥

दूराद्धूते च ८ । २ । ८४

दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा स्यात् ॥

प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५

एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥

ईदूदेद्द्विवचनं प्रगृह्यम् १ । १ । ११

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गंगे अमू ॥

अदसो मात् १ । १ । १२

अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः रामकृष्णावमू आसाते । मात्किम् ? अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥

चादयोऽसत्त्वे १ । ४ । ५७

अद्रव्यार्थाश्चादयो निपाताः स्युः ॥

प्रादयः १ । ४ । ५८

एतेऽपि तथा स्युः ॥

निपात एकाजनाङ् १ । १ । १४

एकोऽच् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित् । ईषदुष्णम् ओष्णम् ।

---

टप्रतिपादक इत्यर्थः । स्फोटायनः अवङः स्मर्ता, अन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धानद्वारेणात्र विकल्पो बोध्यः । "प्लुतप्रगृह्या-" इति । प्लुताश्च प्रगृह्याश्चैतेषामितरेतरद्वन्द्वः प्लुतप्रगृह्याः । प्लुतसंज्ञकाः प्रगृह्यसंज्ञकाश्चेत्यर्थः । ननु "अवङ् स्फोटायनस्य" इति सूत्रादचीत्यनुवर्तनादेवाचि परे प्रकृतिभावविधाने सूत्रस्थमचिग्रहणं व्यर्थं सज्ज्ञापयति आदेशनिमित्ते एवाचि प्रकृतिभावो यथा स्यादिति । तेन जानु उ अस्य रुजति जानू अस्य रुजतीत्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव । "मय उञ" इति पाक्षिकवकारे तु जान्वस्य रुजतीत्यपि । अस्मादिति । अदसो मकारादित्यर्थः । "चादयोऽसत्त्वे" । च आदिर्येषां ते चादयः । सत्त्वं द्रव्यं तद्भिन्नमसत्त्वमद्रव्यमित्यर्थस्तदाह—अद्रव्यार्था इत्यर्थः । एकाजिति । एकश्चासावच्चेत्यसावेकाच् । उदाहरणे इशब्दो वितर्कार्थकः । उशब्दो विस्मयार्थकः । अन्यत्र ङिदिति । 'ईषदर्थे

## ओत् १ । ४ । १५

ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥

## सम्बुद्धौ शाकल्यस्येतावनार्षे १ । १ । १६

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति विष्णविति ॥

## मय उञो वो वा ८ । ३ । ३३

मयः परस्य उञो वो वा स्यात् अचि । किम्वुक्तम् , किमु उक्तम् ॥

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र । चक्र्यत्र । पदान्ता इति किम् ?

## अचो रहाभ्यां द्वे ८ । ४ । ४६

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ (न समासे) वाप्यश्वः ।

## ऋत्यकः ६ । १ । १२८

ऋति परे पदान्ता अकःप्राग्वद्वा। ब्रह्म ऋषिः, ब्रह्मर्षिः। पदान्ताःकिम्? आर्च्छत्॥

इत्यच्सन्धिः ॥

# अथ हल्सन्धिप्रकरणम् ।

## स्तोः श्चुना श्चुः ८ । ४ । ४०

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिन्नोति । सच्चित् । शार्ङ्गिञ्जय ॥

---

क्रियायोगे मर्यादाभिविधौ च यः'। 'एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥ "ओत्"। "निपात एकाच्" इत्यतोऽनुवृत्तं निपातपदं विशेष्यमादाय सूत्रस्थेनौदिति विशेषणेन तदन्तविधिः । प्रगृह्यपदं च पूर्वत एवानुवृत्तं तदाह—ओदन्तो निपात इति । "न समासे" । समासे "इकोऽसवर्णे" इति सूत्रविहितो ह्रस्वसमुच्चितप्रकृतिभावो नेति तदर्थः । आर्च्छदिति । ऋधातोर्लङि आटि ऋच्छादेशे रूपम् । अच् सन्धिरिति । स्पष्टप्रतिपत्तये नात्र कुत्वश्चुत्वे । "स्तोः श्चुना श्चुः । सूत्र तुश्चेति समाहारद्वन्द्वे नपुंसकत्वप्राप्तावपि सौत्रस्त्वात्पुंस्त्वं बोध्यम् । एवं श्चुरित्यत्र

## शात् ८ । ४ । ४४

शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । प्रश्नः ॥

## ष्टुना ष्टुः ८ । ४ । ४१

स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।

## न पदान्ताट्टोरनाम् ८ । ४ । ४२

पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् ? ईट्टे । टोः किम् ? सर्पिष्टमम् । ( अनाम्नवतिनगरीणामिति वाच्यम् ) षण्णाम् । षण्णवतिः । षण्णगर्यः ॥

## तोः षि ८ । ४ । ४३

तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ॥

## झलां जशोऽन्ते ८ । ४ । ३९

पदान्ते झलां जशः स्युः । वागीशः ॥

## यरोऽनुनासिकेऽनुनासिको वा ८ । ४ । ४५

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद् मुरारिः । ( प्रत्यये भाषायां नित्यम् ) तन्मात्रम् ॥ चिन्मयम् ॥

## तोर्लि ८ । ४ । ६० ॥

तवर्गस्य लकारे परे परसवर्णःस्यात् । तल्लयः । विद्वांल्लिखति । नस्यानुनासिको लः ॥

## उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ॥

## तस्मादित्युत्तरस्य १ । १ । ६७

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥

---

उत्तरसूत्रे ष्टुरित्यत्रापि च बोध्यम् । निमित्तकार्यिणोर्यथासंख्याऽभ्युपगमे सकारयोगे- सकारस्यैव चवर्गयोगे चवर्गस्यैव च विधानात् "शादि"ति निषेधसूत्रं व्यर्थं स्यादतो- नात्र स्थान्यादेशयोर्यथासंख्यमिति बोध्यम् । "शात्" इति । "न पदान्तात्" इत्यतो- नेति "तोः षी"त्यतस्तोरिति चानुवर्तते तदाह—शात्परस्य तवर्गस्येति । "न पदान्ताट्टोः" । न, पदान्तात्, टोः, अनामिति पदचतुष्टयं सूत्रे वर्तते । "स्तोः श्चुना" इत्यतः स्तोरिति, "ष्टुना ष्टुः" इत्यतः ष्टुरिति च वर्तते तदाह—पदान्ताट्ट-

## आदेः परस्य १ । १ । ५४

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ।

## झरो झरि सवर्णे ८ । ४ । ६५

हलः परस्य झरो वा लोपः स्यात् सवर्णे झरि ॥

## खरि च ८ । ४ । ५५

खरि परे झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥

## झयो होऽन्यतरस्याम् ८ । ४ । ६२

झयः परस्य हस्य वा पूर्वसवर्णः स्यात् । नादस्य घोषस्य संवारस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः । वाग्घरिः, वाग्हरिः ।

## शश्छोऽटि ८ । ४ । ६३

पदान्तात् झयः परस्य शस्य छो वा स्यादटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते "खरि च" इति जकारस्य चकारः । तच्छिवः, तच्शिवः । ( छत्वममीति वाच्यम् ) तच्छ्लोकेन ॥

## मोऽनुस्वारः ८ । ३ । २३

मान्तस्य पदस्यानुस्वारः स्याद्धलि । हरिं वन्दे ॥

## नश्चापदान्तस्य झलि ८ । ३ । २४

---

वर्गादित्यादि। "झरो झरि सवर्णे"। "हलो यमां यमि लोपः" इत्यतो हलो लोप इति चानुवृत्तिः, "झयो होऽन्यतरस्यामि"त्यतोऽन्यतरस्यामित्यस्यानुवृत्तिस्तदाह–हलः परस्येत्यादि । हलः किम् ? प्रत्तम् । झर इति किम् ? शार्ङ्गम् । झरीति किम् ? 'शिण्ड्‌ढि' ... पच्चाम्' अत्र चकारस्य आकारे परे लोपापत्तिः । अल्लोपस्य स्थानिवत्त्वं नाशङ्कनीयम् "पूर्वत्रासिद्धे न स्थानिवदि"ति निषेधात् । सवर्णे किम् ? तर्प्ता । अत्र यथासंख्यं न भवति सवर्णग्रहणसामर्थ्यात् । तेन शिण्ढीत्यत्र विकल्पेन डस्य लोपः सिध्यतीति भावः । "शश्छोऽटि" । अत्र "झयो होऽन्यतरस्याम्" इत्यतः पदान्तात् झयः इति च पदद्वयमनुवर्तते तदाह—पदान्ताज्झयः परस्येति । तेन विरप्शमित्यादौ शस्य छं न । विपूर्वाद्रपेरौणादिकः शः । "मोऽनुस्वारः" । अत्र "पदस्य" इत्यधिक्रियते तच्च विशेष्यं म इति विशेषणं तेन तदन्तविधिस्तदाह–मान्तस्य पदस्येति पदस्येत्यस्याऽभावे गम्धातोः कर्मणि लटि गम्यते इत्यत्राऽनुस्वारापत्तिर्दोषस्तस्मात्

नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि । ..म् ? मन्यते ॥

**अनुस्वारस्य ययि परसवर्णः ८ । ४ । ५८**

स्पष्टम् । शान्तः ।

**वा पदान्तस्य ८ । ४ । ५९**

पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि ॥

**मो राजि समः क्वौ ८ । ३ । २५**

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥

**हे मपरे वा ८ । ३ । २६**

मपरे हकारे परे मस्य मो वा स्यात् । किम्ह्मलयति, किं ह्मलयति । (यवलपरे यवला वा ) किय्ँ ह्यः किं ह्यः । किव्ँ ह्वलयति, किं ह्वलयति । किल्ँ ह्लादयति, किं ह्लादयति ॥

**नपरे नः ८ । ३ । २७**

नपरे हकारे परे मस्य नो वा स्यात् । किन्ह्नुते, किं ह्नुते ।

**ङः सि धुट् ८ । ३ । २९**

डात्परस्य सस्य धुट् वा स्यात् ॥

**आद्यन्तौ टकितौ १ । १ । ४६**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः षट्सन्तः ॥

---

वश्यकं तदिति भावः । **मो राजि समः क्वौ** । क्विः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तविधौ क्विबन्त इत्यर्थलाभः । **मपर इति** । अत्र बहुव्रीहिसमासः । मः परो यस्मादसौ मपरस्तस्मिन् । एवं नपर इत्यत्रापि नः परो यस्मादिति विग्रहो बोध्यः । ह्मलयति,-ह्वलयति इति रूपद्वयं ( ह्मल ह्वल सञ्चलने ) अनयोर्बोध्यम् । ह्लादयतीति । (ह्लादी सुखे च) इत्यस्य रूपम्बोध्यम् । **"ङः सि धुट्"** । ङ इत्यत्र पञ्चम्याः सीत्यत्र सप्तम्याश्च निर्देशात् "तस्मादित्युत्तरस्य"—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषासूत्राभ्यां परस्य पूर्वस्य चेत्युभयविधार्थप्राप्तौ–'उभयनिर्देशे पञ्चमीनिर्देशो बलीयानि'ति परिभाषया पञ्चमीनिर्देशस्यैव बलीयस्त्वबोधनमित्यत आह–डात्परस्येति । **"आद्यन्तौ टकितौ"** । आदिश्चान्तश्च ऽऽद्यन्तौ–टश्च कश्च टकौ तावितौ ययोस्तौ टकितौ । द्वन्द्वान्ते श्रूयमाणपदस्य प्रत्येकं सम्बन्धनियतत्वा-

## ङ्णोः कुक्टुक् शरि ८ । ३ । २८

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्) प्राङ् ख्षष्ठः, प्राङ् क्षष्ठः । प्राङ् षष्ठः । सुगण्ठ्षष्ठः सुगण्ट्षष्ठः, सुगण्षष्ठः ॥

## नश्च ८ । ३ । ३०

नान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः, सन्सः ॥

## शि तुक् ८ । ३ । ३१

पदान्तस्य नस्य शे परे तुग्वा स्यात् । सञ्छम्भुः, सञ्च्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः ॥

## ङमो ह्रस्वादचि ङमुण् नित्यम् ८ । ३ । ३२

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

## समः सुटि ८ । ३ । ५

समो रुः स्यात् सुटि ॥

## अत्रानुनासिकः पूर्वस्य तु वा ॥ ८ । ३ । २

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् ॥

## अनुनासिकात्परोऽनुस्वारः ८ । ३ । ४

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् ।

---

दिच्छब्दयोभयत्र सम्बन्धस्तदाह—टात्कताविति । पौष्करसादेरिति । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् तस्यापत्यं पौष्करसादिस्तस्य । एतन्नाम्न आचार्यस्य मते इत्यर्थः । "शि तुक्" । अत्र सूत्रे शीति सप्तमी पूर्वसूत्रे कृताया न इति पञ्चम्याः षष्ठीं प्रकल्पयति तदाह—पदान्तस्य नस्येति । सञ्छम्भुरिति । 'च्छौ च्छा चशा शाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्' । "ङमो ह्रस्वादचि" । अत्र ङम् इति प्रत्याहारः । सञ्ज्ञायां कृतस्य टित्वस्य सामर्थ्यात्संज्ञिभिः सम्बन्धाद्यथासंख्यं ङुट् णुट् नुटः प्रवर्तन्ते इति । "हे मपरे वा" "मय उञो वो वा" इति विकल्पद्वयमध्येऽस्य पाठान्नित्यत्वलाभान्नित्यग्रहणमिह व्यर्थमिति न शङ्क्यम् । पञ्चस्वप्युत्तरसूत्रेषु "हे मपरे वा" इति विकल्पानुवृत्तिर्भवति न वेति शङ्कावारणाय तस्यावश्यकत्वात् । अनुनासिकादिति । ल्यब्लोपपञ्चम्यन्तमिदं, तदाह—अनुनासिकं विहायेति । अनुनासिकाऽभावपक्षे इति तदर्थः । अवसा

## खरवसानयोर्विसर्जनीयः ८ । ३ । १५

खरि अवसाने च पदान्तस्य रस्य विसर्गः स्यात् । ( संपुंकानां सो वक्तव्यः ) सँस्स्कर्ता संस्स्कर्ता ॥

## पुमः खय्यम्परे ८ । ३ । ६

अम्परे खयि पुमो रुः स्यात् । पुँस्कोकिलः, पुंस्कोकिलः ॥

## नश्छव्यप्रशान् ८ । ३ । ७

अम्परे छवि नान्तस्य पदस्य रुः स्यात् ॥

## विसर्जनीयस्य सः ८ । ३ । ३४

खरि विसर्जनीयस्य सः स्यात् । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् ? प्रशान्तनोति । पदान्तस्येति किम् ? हन्ति ॥

## नॄन् पे ८ । ३ । १०

नॄनित्यस्य रुर्वा स्यात् पकारे परे ॥

## कुप्वोः ᳲक ᳲपौ च ८ । ३ । ३७

कवर्गे पवर्गे च विसर्गस्य ᳲक ᳲपौ स्तः । चाद्विसर्गः । नॄँᳲपाहि, नॄंᳲपाहि । नॄँःपाहि, नॄंःपाहि नॄन्पाहि, ॥

## तस्य परमाम्रेडितम् ८ । १ । २

द्विरुक्तस्य परं रूपमाम्रेडितं स्यात् ॥

## कानाम्रेडिते ८ । ३ । १२

धेनुरानीयतामित्यत्रेव संसर्गवद्विप्रयोगोऽपि विशेषावगतिहेतुस्तथा चोपस्थितत्वादाकाङ्क्षितत्वाच्च सम्भावितानुनासिकत्वगुण एव सम्बध्यते तदाह–रोः पूर्वस्मादिति । अम्पर इति । अम्प्रत्याहारान्तर्गतवर्णः परो यस्मात् स तस्मिन् । खय् प्रत्याहारः । अम्परे इत्यस्याभावे पुङ्क्षीरमित्यत्र रुत्वापत्तिरतस्तत् । पुंस्कोकिल इति । पुमांश्चासौ कोकिल इति विग्रहः । "नॄन्पे" । नॄनिति । द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम् । पकारोपरि अकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । उभयथर्क्षु इत्यत्र उभयथापदानुवृत्तेर्विकल्पः फलतीत्यत आह:–रुः स्याद्वेति । "कुप्वोः" । ननु खर्परत्वाऽभावात्कुप्वोरित्यत्र विसर्गो नेति नाशङ्क्यम् । जिह्वामूलीयस्य खत्वेन तदुपपत्तेः । एतत्सूत्रविधेयभूते वर्णद्वये कपयोरुच्चारणार्थत्वं बोध्यम् । अन्यथा तयोरपि विधानापत्तेः । कानाम्रेडिते । कान् कान् इत्येवास्तु सूत्रम् । आम्रेडितग्रहणं मास्तु । तदेव

कान्नकारस्य रुः स्यादाम्रेडिते । काँस्कान् । कांस्कान् ॥

छे च ६ । १ । ७३

ह्रस्वस्य छे परे तुगागमः स्यात् । शिवच्छाया ॥

पदान्ताद्वा ६ । १ । ७६

दीर्घात्पदान्ताच्छे परे तुग् वा स्यात् । लक्ष्मीच्छाया । लक्ष्मी छाया ॥

इति हल्सन्धिः ।

## अथ विसर्गसन्धिप्रकरणम् ॥

विसर्जनीयस्य सः ८ । ३ । ३४

खरि । विष्णुस्त्राता ॥

वा शरि ८ । ३ । ३६

शरि विसर्गस्य विसर्गो वा स्यात् । हरिः शेते, हरिश्शेते ।

ससजुषो रुः ८ । २ । ६६

पदान्तस्य सस्य सजुषूशब्दस्य च रुः स्यात् ॥

अतो रोरप्लुतादप्लुते ६ । १ । ११३

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ॥

हशि च ६ । १ । ११४

अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः ॥

---

व्यर्थीभूय ज्ञापयति यत्र द्विरुक्तिस्तत्रैव सत्वं यथा स्यादिति । तेन कान् कान् पश्यसीत्यत्र सत्वं न भवति । अत्रैकः किंशब्दः प्रश्ने, अपरः किंशब्दः क्षेपे कान् कुत्सितान् पश्यसीति तदर्थः । "छे च" । अत्र छकारोपर्यकार उच्चारणार्थः । "विदिभिदिच्छिदेः कुरच्" इति निर्देशात् । तेन विच्छिन्नमित्यादेः सिद्धिरिति बोध्यम् । "ससजुषो रुः" । अत्र स इति लुप्तषष्ठ्यन्तं पृथक्पदम् । सजुष इति च षष्ठ्यन्तम् । अतो रोरिति । "एङः पदान्तादति" इत्यतोऽतीत्यस्यानुवृत्तिस्तदाह अतीति । "हशि च" । अत्र "अतो रोरप्लुतादप्लुते" इति सम्पूर्णसूत्र मनुवर्तते तदाह—अप्लुताद

## भोभगोअघोअपूर्वस्य योऽशि ८।३।१७

एतत्पूर्वस्य रोर्यादेशः स्यादशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः, तेषां रोरुत्वे कृते ।

## हलि सर्वेषाम् ८।३।२२

भो भगो अघो अपूर्वस्य लोपःस्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ।

## रोऽसुपि ८।२।६९

अह्नो रेफादेशो न तु सुपि । अहरहः । अहर्गणः ॥

## रो रि ८।३।१४

रेफस्य रेफे परे लोपः स्यात् ।

## ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।१११

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् ? तृढः, वृढः । मनस् रथ इत्यत्र रुत्वे कृते "हशि च" इत्युत्वे "रो रि" इति लोपे च प्राप्ते ॥

## विप्रतिषेधे परं कार्यम् १।४।२

तुल्यबलविरोधे सति परं कार्यं स्यात् । इति लोपे प्राप्ते । "पूर्वत्रासिद्धम्" इति

---

इत्यादि । "भो भगो" । सौत्रत्वादत्र सूत्रे भगोअघोशब्दयोरोकारस्याऽकारस्य च पूर्वरूपात्मकं सन्धिकार्यं न भवति । अथ वा त्रयाणां सान्तानां रान्तानां वाऽनुकरणत्वे यत्व-यलोपाभ्यामसन्धिर्न्याय्य एवेति बोध्यम् । देवा इहेति । "पूर्वत्रासिद्धम्" इतिसूत्रेण सापादिकशास्त्रदृष्ट्या त्रैपादिकशास्त्रस्यासिद्धत्वबोधनात् "लोपः शाकल्यस्य" इति यलोपस्य "आद्गुण" इत्यस्य दृष्ट्याऽसिद्धत्वेन गुणात्मकं सन्धिकार्यमत्र न भवतीति बोध्यम् । सर्वेषामिति । आचार्याणामिति शेषो बोध्यः । भोशब्दादिपूर्वकयकारस्य सर्वेषामाचार्याणां मतेन नित्यं लोप इति भावः । "रो रि" । अत्र "ढो ढे लोप" इति सूत्राल्लोपपदानुवृत्तिस्तदाह—लोपः स्यादिति । "ढ्रलोपे पूर्वस्य" । ढश्च रश्च ढ्रौ तौ लोपयतीति ढ्रलोपस्तस्मिन् । लोपनिमित्तयोरित्यस्याग्रे ढरेफयोरिति शेषो बोध्यः । तृढः वृढ इति । तृह हिंसि हिंसायाम् । वृहू उद्यमने आभ्यां क्तः । ऊदित्वाद्वेट्कत्वेन "यस्य विभाषा" इति निष्ठायामिण्निषेधः । ढत्व-ष्टुत्व-ढलोपाः । "विप्रतिषेधे परं कार्यम्" । स्वांशे स्वांशे लब्धावकाशयोः

"रोरि" इत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६ । १ । १३२**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्यात् हलि नतु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? एषको रुद्रः । अनञ्समासे किम् ? असः शिवः । हलि किम् ? एषोऽत्र ॥

**सोऽचि लोपे चेत्पादपूरणम् ६ । १ । १३४**

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्यत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसन्धिः ।

# अथाऽजन्तपुँल्लिङ्गप्रकरणम् ॥

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् ॥

**कृत्तद्धितसमासाश्च १ । २ । ४६**

---

शास्त्रयोर्युगपत्प्राप्तिः तुल्यबलविरोधस्तस्मिन् । उत्वमेवेति । सिद्धासिद्धयोः "हशि च" "रो रि" इत्यनयोरसमानबलत्वात् विप्रतिषेधसूत्रस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेवेति भावः । "सोऽचि" । सूत्रे सस् इति प्रथमैकवचनान्तस्य तच्छब्दस्यानुकरणं लुप्तषष्ठीकमित्याह—स इत्यस्येति । सैष दाशरथीति । सम्पूर्णश्लोकस्वरूपं तु—'सैष दाशरथी रामः सैष राजा युधिष्ठिरः' । 'सैष कर्णो महात्यागी सैष भीमो महाबलः'। इति ॥ अर्थवदधातुरिति । अर्थोऽस्यास्तीत्यर्थवत् । दधाति धारयत्यनेकार्थानिति धातुर्न धातुरधातुः । प्रतीयते विधीयते इति प्रत्ययो न प्रत्ययोऽप्रत्ययः । पदं पदं प्रतिपदं तत्र भवं प्रातिपदिकम् । प्रत्ययपदावृत्तिः तत्रैकः प्रत्ययपरोऽपरश्च प्रत्ययान्तपरः । प्रत्ययग्रहणपरिभाषया प्रत्ययशब्दात्तदन्तविधिः । सूत्रेऽर्थवद्ग्रहणाऽभावे धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसञ्ज्ञा स्यादतस्तत् । अधातुग्रहणाभावे अहन्नित्यत्र नलोपापत्तिः । अत्र सूत्रे व्यक्तिमत्त्वमर्थवत्त्वमिति प्राञ्चः । नव्यास्तु एतसञ्ज्ञाफलभूतविभक्तितदर्थमाभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति वदन्ति । "कृत्तद्धितसमासाश्च" । कृच्च तद्धितश्च समासश्चैतेषामितरेतरद्वन्द्वः

कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः ॥

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४ । १ । २**

सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥

**ङ्याप्प्रातिपदिकात् ४ । १ । १**

**प्रत्ययः ३ । १ । १**

**परश्च ३ । १ । २**

इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥

**सुपः १ । ४ । १०३**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥

**द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२**

द्वित्वैकत्वयोरेते स्तः ॥

**विरामोऽवसानम् १ । ४ । ११०**

वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥

---

कृत्तद्धितसमासाः । स्वौजसमौडिति । अत्र समाहारद्वन्द्वो बोध्यः । 'ङ्याप्प्रातिपदिकात्' । ङी च आप् च प्रातिपदिकञ्चैषां समाहारद्वन्द्वः ङ्याप्प्रातिपदिकं तस्मात् । ङी आप् च प्रत्ययौ ताभ्यां प्रत्ययग्रहणपरिभाषया तदन्तविधौ ङ्यन्तादाबन्ताच्चेत्यर्थलाभः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया प्रातिपदिकपदेनैव ङ्याबन्तयोरपि ग्रहणे सूत्रे ङ्याप्पदं व्यर्थमिति नाऽऽशङ्क्यम् । तस्य ङ्याबन्तादेव तद्धितोत्पत्तिर्भवतु ङ्याब्भ्यां प्राक् मा भवत्वित्यर्थज्ञापनेन साफल्यात् । "सुपः" । "तिङस्त्रीणि त्रीणि" इत्यतस्त्रीणित्रीणीति पदद्वयानुवृत्तिः । "तान्येकवचनद्विवचनबहुवचनान्येकशः" इति सूत्रस्य तानीतिपदरहितस्य चानुवृत्तिस्तदाह–सुपस्त्रीणित्रीणीत्यादि । द्व्येकयोरिति । इह द्व्येकशब्दौ संख्यापरौ न तु संख्येयपरौ तथा सति बहुवचनापत्तेरित्यभिप्रेत्याह–द्वित्वैकत्वयोरिति । रुत्वविसर्गाविति । "उपदेशेऽजनुनासिक" इति सूत्रस्थव्याख्या रुत्वस्याऽसिद्धत्वादु-

## सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥

## प्रथमयोः पूर्वसवर्णः ६ । १ । १०२

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥

## नादिचि ६ । १ । १०४

आदिचि न पूर्वसवर्णदीर्घः । "वृद्धिरेचि" । रामौ ॥

## बहुषु बहुवचनम् १ । ४ । २१

बहुत्वविवक्षायां बहुवचनं स्यात् ॥

## चुटू १ । ३ । ७

प्रत्ययाद्यौ चुटू इतौ स्तः ॥

## विभक्तिश्च १ । ४ । १०४

सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥

---

कारस्येत्सञ्ज्ञालोपयोरभावात् त्रिपाद्यां स्थानिवत्त्वस्याप्रवृत्त्या रेफान्तस्य पदत्वाभावाच्चाऽत्र विसर्गो न स्यादिति चेन्न । "नमु ने" इत्यत्र नेति योगविभागेनाऽसिद्धत्वाभावज्ञापनादिष्टसिद्धेरिति भावः । सरूपाण्येवेति । "वृद्धो यूना तल्लक्षणश्चेदेव विशेषः" इतिसूत्रादेवपदापकर्षादित्यर्थलाभः । येषामेकस्यामपि विभक्तौ विरूपाणि न दृष्टानि तेषामेकशेष इति निष्कृष्टोऽर्थः । अत एव जननीवाचकपरिच्छेत्तृवाचकयोर्मातृशब्दयोर्मातृभ्यां मातृभिरित्यादौ वैरूप्येऽपि औजसादिषु सारूप्यादेकशेषो नेति बोध्यम् । "प्रथमयोः पूर्वसवर्णः" । प्रथमा च प्रथमा च प्रथमे तयोः प्रथमयोः । अत्रैकः प्रथमाशब्दः प्रथमाविभक्तिबोधकोऽपरश्च प्रथमाशब्दो द्वितीयाविभक्तिबोधकस्तदाह—प्रथमाद्वितीययोरिति । "चुटू" । "षःप्रत्ययस्य" इत्यतः प्रत्ययस्य, "आदिर्ञिटुडवः" इत्यत आदेश्चानुवृत्तिस्तदाह-प्रत्ययाद्याविति । "विभक्तिश्च" । "तिङस्त्रीणि त्रीणि" इत्यतस्तिङ्ग्रहणस्य व्यवहितस्यापि स्वरितत्वप्रतिज्ञाबलादनुवृत्तिः । "सुपः" इति सूत्रात् सुप इति सान्निहितस्य चानुवृत्तिरित्यभिप्रेत्याह—सुप्तिङाविति । प्रयोजनाऽभावात् सुप्तिङोर्विभक्तिसंज्ञाविधानं विफलमिति नाशङ्कनीयम् । अभवत् अभूदित्यादौ "न विभक्तौ"ति तकारस्येत्त्वाभावरूपस्य त्यदाद्यत्वादिकस्य च तिङसुपोर्विभक्तिसंज्ञाविधानप्रयोज-

**न विभक्तौ तुस्माः १ । ३ । ४**

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सस्य नेत्त्वम् । रामाः ॥

**एकवचनं सम्बुद्धिः २ । ३ । ४९**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३**

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् ॥

**एङ्ह्रस्वात्सम्बुद्धेः ६ । १ । ६९**

एङन्तात् ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ।

**अमि पूर्वः ६ । १ । १०७**

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् ॥ रामम् । रामौ ॥

**लशक्वतद्धिते १ । ३ । ८**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥

---

तद्वयस्य सत्त्वात् । न चाऽनुक्तसमुच्चयार्थकस्य चकारस्यात्रोपादानं प्रयोजनाभावा- द्विफलमिति वाच्यम् ? पुनः-वचनसंज्ञाभिः समावेशार्थत्वेन चकारोपादानस्य साफ- ल्यात् । अन्यथैकसंज्ञाधिकारादेकवचनादिभिः सह वचनद्वयप्रामाण्यात्पर्यायतापत्त्या रामेभ्य इत्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाभावात्सस्येत्त्वापत्तिः स्यादिति भावः । "न विभक्तौ तुस्माः" "हलन्त्यम्" इत्यनेन तवर्गसकारयोरित्वे प्राप्तेऽस्यारम्भः । "यस्मात्प्रत्ययविधिस्तदादि" अत्र तदादिग्रहणं विकरणविशिष्टस्याऽङ्गसंज्ञार्थं, तेन भवामि भविष्यामीत्यादीसिद्धिः । प्रत्ययग्रहणं च प्रत्ययविशिष्टस्य ततोऽप्यधि- कस्य चाङ्गसंज्ञाऽभावार्थम् । एङ्ह्रस्वादिति । अत्राऽङ्गस्याऽऽक्षेपस्तच्च विशेष्य- मादाय विशेषणाभ्यामेङ्ह्रस्वाभ्यां तदन्तविधावेङन्तात् ह्रस्वान्तादित्यर्थलाभः । "अ- मि पूर्वः" । "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घे प्राप्तेऽस्याऽऽरम्भः । "प्रथमयो" रित्यतोऽक इति, "इको यणची"त्यतोऽचीति चानुवर्तते तदाह—अ- कोऽम्यचीति । अमि योऽच् तस्मिन् , अर्थात् अमोऽवयवेऽचि परत इति । एवं च मकारसहितस्य न पूर्वरूपापत्तिरिति बोध्यम् । "लशक्वतद्धिते" । "आदि- र्ञिटुडवः" इत्यत आदिः "षः प्रत्ययस्य" इत्यतः प्रत्ययस्येति चानुवर्तते । लश्च शश्च कुश्चेति समाहारद्वन्द्वे लशकु इति नपुंसकम् । तदेवेतरेतरयोगेन विवृणोति—लशक-

**तस्माच्छसो नः पुंसि ६ । १ । १०३**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥

**अट्कुप्वाङ्नुम्व्यवायेऽपि ८ । ४ । २**

अट् कवर्गं पवर्गं आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे । इति प्राप्ते ॥

**पदान्तस्य ८ । ४ । ३७**

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥

**टाङसिङसामिनात्स्याः ७ । १ । १२**

अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥

**सुपि च ७ । ३ । १०२**

यञादौ सुपि अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ॥

**अतो भिस ऐस् ७ । १ । ९**

"अनेकाल्शित्सर्वस्य" । रामैः ॥

**ङेर्यः ७ । १ । १३**

अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥

**स्थानिवदादेशोऽनल्विधौ १ । १ । ५६**

आदेशः स्थानिवत्स्यान्न तुस्थानिअलाश्रयविधौ । इति स्थानिवत्त्वात् "सुपिच"

---

वर्गो इति" । सूत्रेऽतद्धिते इत्यनुक्तौ कर्णशब्दाद्भवार्थे कनि कर्णिकेत्यत्र ककारस्येत्त्वे "क्ङिति च" इति वृद्ध्यापत्तिः । प्रत्ययगाया इत्यर्थांकरणे वराक इत्यत्र ककारस्येत्त्वे "क्ङिति च" इति गुणनिषेधापत्तिः । स्थानिवदेति । स्थानिना तुल्यं, स्थानिवत् । आदिश्यतेऽसावादेशः । अला विधिरलो विधिरलि विधिरालि विधिरालविधिः, न अल्विधिरनल्विधिस्तस्मिन् । अनलीत्युच्यमानेऽपि सिद्धौ विधिग्रहणमुक्तविधसमासचतुष्टयलाभार्थम् । तेन व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य प्राप्तं णत्वम् 'अनल्विधा'विति निषेधान्न भवति । द्यौः पन्थाः इत्यादावौत्वाऽऽत्वयोः स्थानिवत्त्वेन हल्त्वमाश्रित्य प्राप्तसुलोपोऽनल्विधाविति निषेधान्न भवति । 'द्युकाम' इत्यत्रोत्वस्य स्थानिवत्त्वेन वकाराश्रयणात् प्राप्तो "लोपो व्यो"रिति वलोपोऽनल्विधाविति निषेधान्न भवति । क इष्ट इत्यत्र सम्प्रसारणस्य स्थानिवत्त्वेन प्राप्तं "हशि च" इत्युत्व-

इति दीर्घः । रामाय, रामाभ्याम् ॥

## बहुवचने झल्येत् ७ । ३ । १०३

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । सुपि किम् ? पचध्वम् ॥

## वाऽवसाने ८ । ४ । ५६

अवसाने झलां चरो वा स्युः । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य॥

## ओसि च ७ । ३ । १०४

ओसि परे अतोऽङ्गस्यैकारः स्यात् । रामयोः ॥

## ह्रस्वनद्यापो नुट् ७ । १ । ५४

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ॥

## नामि ६ । ४ । ३

नामि परे अजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् रामे, । रामयोः । एत्वे कृते ॥

## आदेशप्रत्यययोः ८ । ३ । ५९

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः स्यात् । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥

## सर्वादीनि सर्वनामानि १ । १ । २७

सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः । सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर त्वत् त्व नेम सम सिम, पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं बहिर्योगोपसंव्यानयोः, त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥

---

मनल्विधाविति निषेधान्न भवति । **रामायेति** । अत्र दीर्घे कर्तव्ये सन्निपातपरिभाषाविरोधो न शंक्यः, तस्याः "कष्टाय क्रमणे" इति सूत्रानिर्देशेनाऽनित्यत्वज्ञापनात् । **रामस्येति** । अत्र "अनचि च" इति सूत्रेण द्वित्वे सकारस्य चर्त्वेऽपि सकारस्य सकार एव भवति नतु तकारः सकारतकारयोः प्रयत्नभेदात् । अत एव "सः सी"तिसूत्रेण सकारस्य तादेशः ।"**आदेशप्रत्यययोः**" । "इण्को"रित्यस्य"अपदान्तस्य मूर्धन्यः" इत्यतोऽपदान्तस्य चाधिकारस्तदाह-**इण्कुभ्यां परस्यापदान्तस्येति** । इण्कोः किम् ? रामस्य । आदेशप्रत्यययोः किम् ? सुपीः सुपिसौ सुपिसः । अपदान्तस्य किम् ? हरिस्तत्र । **सर्वादीनि** । सर्व आदिर्येषां तानि सर्वादीनि तद्गुणसंविज्ञानबहुव्रीहिरयम् । अनेन तदन्तस्यापि संज्ञा भवति । प्रमाणं चात्र "द्वन्द्वे च"इति सूत्रमेव । त-

## जसः शी ७ । १ । १७

अ[illegible] सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥

## सर्वनाम्नः स्मै ७ । १ । १४

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् ॥

## ङसिङ्योः स्मात्स्मिनौ ७ । १ । १५

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥

## आमि सर्वनाम्नः सुट् ७ । १ । ५२

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । "प्रत्ययग्रहणे तदन्तग्रहणम्"मिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न । "यथासङ्ख्यमनुदेशः समानाम्" इति ज्ञापकात् ॥

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्था-यामसंज्ञायाम् १ । १ । ३४

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे पूर्वाः । असंज्ञायां किम् ? उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः । कुशला इत्यर्थः ॥

## स्वमज्ञातिधनाख्यायाम् १ । १ । ३५

---

त्फलं च परमसर्वेत्यत्र त्वल्सिद्धिः, परमभवकान् इत्यत्राऽकच्प्रसिद्धिश्च । "जसः शी" । अत्र विधेये दीर्घोच्चारणं वारिणी मधुनीत्याद्युत्तरार्थम् । अकजर्थ इति । "अव्ययसर्वनाम्नामकच् प्राक् टे"रित्येतद्विहितो योऽकच् तदर्थं इत्यर्थः । न च क-प्रत्ययेनाप्युभकाविति प्रयोगः स्यादेव तस्याऽकजर्थपाठोऽकिञ्चित्कर इति वाच्यम् ? तथा सति द्विवचनपरत्वाऽभावादुभयत उभयत्रेत्यत्रेवाऽयचो दुर्वारत्वेन गणे पाठस्य सार्थक्यात् । डतरडतमाविति । "किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" इति सूत्रविहितो डतरः, "वा बहूनां जातिपरिप्रश्ने डतमच्" इति सूत्रविहितो डतमश्चे-त्यर्थः । "पूर्वपरावरदक्षिणोत्तरापराधराणि" । पूर्वश्च परश्चाऽवरश्च दक्षिणश्चोत्त-रश्चाऽपरश्चाऽधरश्चेत्येतेषामितरेतरद्वन्द्वः पूर्वपरावरदक्षिणोत्तरापराधराणि । अत्र व्यव-

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । स्वे, स्वाः । स्वीया आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥

## अन्तरं बहिर्योगोपसंव्यानयोः १ । १ । ३६

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । अन्तरे, अन्तराः, वा गृहाः । बाह्या इत्यर्थः । अन्तरे, अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥

## पूर्वादिभ्यो नवभ्यो वा ७ । १ । १६

एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १ । १ । ३३

एते जसि उक्तसंज्ञा वा स्युः । प्रथमे, प्रथमाः । तयः प्रत्ययः । द्वितये, द्वितयाः । शेषं रामवत् । नेमे, नेमाः । शेषं सर्ववत् । ( तीयस्य ङित्सु वा ) द्वितीयस्मै, द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ॥

## जराया जरसन्यतरस्याम् ७ । २ । १०१

जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । ( पदाङ्गाधिकारे तस्य च तदन्तस्य च ) ( निर्दिश्यमानस्यादेशा भवन्ति ) । ( एकदेशविकृतमनन्यवत् ) इति जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः । इत्यादि । पक्षे । हलादौ च रामवत् । विश्वपाः ॥

---

स्थायामसंज्ञायामितिद्वयमर्थनिर्देशः । अनेन सूत्रेण पूर्वादिशब्दानामुभयस्मिन्नर्थे गणसूत्रात्प्राप्तसर्वनामसंज्ञाया जसि विकल्पेन विधानम् । व्यवस्था च स्वाभिधेयापेक्षावधिनियमरूपा । स्वस्य पूर्वादिशब्दस्याऽभिधेयेन नाम्नाऽपेक्ष्यमाणस्याऽवधेर्नैयम इति तदर्थः । तयः प्रत्यय इति । "संख्याया अवयवे तयप्" इति सूत्रकृतस्तयप्प्रत्यय इत्यर्थः । प्रत्ययग्रहणपरिभाषया तस्मात्तदन्तानां ग्रहणम् । तीयस्य ङित्सु वा । तीयप्रत्ययान्तस्येति तदर्थः । "द्वेस्तीयः" त्रेः सम्प्रसारणञ्च" इति सूत्रद्वयेन द्वित्रिशब्दाभ्यां तीयप्रत्ययो भवति । "जराया जरसन्यतरस्याम्" । "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवर्तते । "अचि र ऋतः" इत्यतोऽचीत्यनुवर्तते तस्मात् ( यस्मिन्विधिस्तदादावल्ग्रहणे ) इति परिभाषया तदादिविधिस्तदाह—अजादाविति । पदाङ्गाधिकार इति । पदाधिकारीयमङ्गाधिकारीयं च कार्यं तस्य सूत्रोपात्तसजातीयस्य तदन्तस्य सूत्रोपात्तसजातीयान्तस्य च भवतीत्यर्थः । एकदेशविकृतमिति । एकदेशे विकृतं विकारयुक्तं पदम् अन्यवन्न भवतीत्यर्थः । यथा छिन्नपुच्छः श्वा श्वैव नत्वश्वो नापि गर्दभ इति । विकारश्च न्यूनमाधिक्यम्वा ।

## दीर्घाज्जसि च ६ । १ । १०५

[illegible]सि इचि च परे न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ विश्वपाः । हे विश्वपाः [illegible]श्वपाम्, विश्वपौ ।

## सुडनपुंसकस्य १ । १ । ४३

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥

## स्वादिष्वसर्वनामस्थाने १ । ४ । १७

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ॥

## यचि भम् १ । ४ । १८

यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् ॥

## आकडारादेका संज्ञा १ । ४ । १

इत ऊर्ध्वं "कडाराः कर्मधारये" इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ॥

## आतो धातोः ६ । ४ । १४०

आकारान्तो यो धातुस्तदन्तस्य लोपः स्यात् । "अलोऽन्त्यस्य" । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? हाहान् । हरिः ॥

## जसि च ७ । ३ । १०९

ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः ॥

## ह्रस्वस्य गुणः ७ । ३ । १०८

ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । हे हरे । हरिम् । हरी, हरीन् ।

---

"दीर्घाज्जसि च" । "नादिचि"त्यतो नेति इचीति च पदद्वयमनुवर्तते । "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णमनुवर्तते तदाह—इचि च परे न पूर्वसवर्णदीर्घ इति । वृद्धिरिति । "वृद्धिरेची"त्यनेनेति भावः । "यचि भम्" । यच्च अच्चेत्यनयोः समाहारद्वन्द्वः यच् तस्मिन् यचि । यचीत्यल्ग्रहणेन सप्तमीनिर्देशात् (यस्मिन्विधिस्तदादावल्ग्रहणे) इति परिभाषया तदादिपदोपस्थितिस्तदाह—यकारादिष्वजादिषु चेति । धातोः किम् ? हाहान् । "आतो धातो" रित्यत्र धातोरित्यस्याभावे अकारान्तस्य भस्याङ्गस्य लोप इत्यर्थे अव्युत्पन्नप्रातिपदिकस्य गन्धर्ववाचकस्य हाहाशब्दस्याऽऽकारान्तत्वाल्लोपः स्यात् । ततस्त्वे तु उक्तशब्दस्य

## शेषो घ्यसखि १।४।७

शेष इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घि[...]

## आङो नाऽस्त्रियाम् ७।३।१२०

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। हरिभ्याम्, हरिभिः॥

## घेर्ङिति ७।३।१११

घिसंज्ञस्य ङिति सुपि गुणः स्यात्। हरये॥

## ङसिङसोश्च ६।१।११०

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्। हरेः। हर्योः, हरीणाम्॥

## अच्च घेः ७।३।११९

इदुद्भ्यामुत्तरस्य ङेरौत् स्यात् घेरन्तादेशश्चाकारः। हरौ। हरिषु। एवं कव्यादयः॥

## अनङ् सौ ७।१।९३

सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ॥

## अलोऽन्त्यात्पूर्व उपधा १।१।६५

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्॥

## सर्वनामस्थाने चासम्बुद्धौ ६।४।८

---

धातुत्वाभावाल्लोपो नेति। जहातीति हाहा इति व्युत्पत्त्या तस्य क्रियाशब्दत्वाश्रयणे न हाहानिति प्रत्युदाहरणं भवति, किन्तु सानिति प्रत्युदाहरणं बोध्यम्। "शेषो घ्यसखि"। अत्र सूत्रे शेषग्रहणसत्त्वे ऽनदीसंज्ञावित्यर्थस्तद्ग्रहणाऽभावे तु उक्तार्थो न स्यात्। एवञ्च ह्रस्वौ याविदुतौ तदन्तमित्यर्थे मत्यै इत्यत्र नदीसंज्ञापक्षे घिसंज्ञायाम् आटि गुणेऽयादेशे च मतयै इति स्यादतः शेषग्रहणम्। "आङो नाऽस्त्रियाम्"। अत्राऽस्त्रियां ग्रहणं विहाय लाघवात्पुंसीत्येव वक्तव्यमिति नाशङ्कनीयम्। तथा सति पुंस्येव नाभावः स्यात् क्लीबे अमुना कुलेनेत्यत्र नाभावो न स्यात्। न च तत्र नुमैव रूपसिद्धिरिति वाच्यम्? नुमः घ्य मुत्वस्याऽसिद्धत्वे नुमोऽप्रवृत्तेः। न च नादेशेऽपि मुत्वासिद्धिः स्यादिति वाच्यम्? "न मुने" इति निषेधस्य जागरूकत्वादिति भावः। "अनङ् सौ"। अत्र "सख्युरसम्बुद्धावि" त्यनेनाऽसम्बुद्धावित्यनुवर्तते तदाह–असम्बुद्धौ साविति। सर्वनामस्थाने च। अत्र "नो-

...योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने ॥

**अपृक्त एकाल्प्रत्ययः १ । २ । ४१**

...ल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६ । १ । ६८**

हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥

**नलोपः प्रातिपदिकान्तस्य ८ । २ । ७**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः स्यात् । सखा ॥

**सख्युरसम्बुद्धौ ७ । १ । ९२**

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥

**अचो ञ्णिति ७ । २ । ११५**

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ । सखायः । हे सखे । सखायम् । सखायौ । सखीन् । सख्या । सख्ये ॥

**ख्यत्यात्परस्य ६ । १ । ११२**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥

**औत् ७ । ३ । ११८**

इदुद्भ्यां परस्य ङेरौत् स्यात् । सख्यौ । शेषं हरिवत् ॥

---

पधायाः" इत्यतो न उपधाया दीर्घ इति पदत्रयमनुवर्तते । तदाह—नान्तस्योपधाया दीर्घ इति । "हल्ङ्याब्भ्यो दीर्घात्" । हल्च ङीच आप् चैतेषामितरेतरद्वन्द्वो हल्ङ्यापस्तेभ्यो हल्ङ्याब्भ्यः । अत्र तीतिशब्देन तिप्प्रत्ययसाहचर्येण सिप्प्रत्ययस्यैव ग्रहणं नतु सिच्प्रत्ययस्य ( सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणमि ) ति परिभाषया सहचरितस्यैव ग्रहणप्रसिद्धेः । अत एव अभैत्सीदित्यत्र नानेन तकारलोपः । सिशब्देन सिप्सिचोर्ग्रहणे तु तलोपप्रसक्तिर्दुर्वारा स्यादिति भावः । "अचो ञ्णिति" । "मृजेर्वृद्धि" रित्यतो वृद्धिरित्यनुवर्तते । "अङ्गस्य" इति चानुवर्तते : इदं च विशेष्यं विशेषणीभूतेनाऽच इत्यनेन तदन्तविधिस्तदाह-अजन्ताङ्गस्य वृद्धिरिति । "ख्यत्यात्परस्य" । अत्र ख्यत्यादिति पञ्चमीनिर्देशादेव परस्येत्यर्थलाभे परस्य ग्रहणं व्यर्थमिति नाशङ्कनीयम् । "एकः पूर्वपरयो" रित्यस्याऽनुवृत्त्यभावसूचनार्थत्वेन तस्य सार्थक्यात् । ख्यश्च त्यश्चेति समाहारद्वन्द्वः

## पतिः समास एव १ । ४ । ८

पतिशब्दः समास एव घिसंज्ञः । पत्ये । पत्युः २ । पत्यौ । शेषं हरिव[illegible]
त्तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥

## बहुगणवतुडति संख्या १ । १ । २३

एते सङ्ख्यासंज्ञाः स्युः ॥

## डति च १ । १ । २५

डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् ॥

## षड्भ्यो लुक् १ । १ । २२

षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥

## प्रत्ययस्य लुक्श्लुलुपः १ । १ । ६१

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२

प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् । इति "जसि च" इति गुणे प्राप्ते ॥

## न लुमताऽङ्गस्य १ । १ । ६३

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कतिशब्दो नित्यं बहुवचनान्तः । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रीन् । त्रिभिः । त्रिभ्यः २ ॥

---

ख्यत्वं तस्मात् ख्यत्यात् । कृतयणादेशयोः खिखीशब्दयोरनुकरणं ख्येति । तथा भूतयोस्तितीशब्दयोरनुकरणं त्येति । नं तु मुख्याऽऽख्यादिशब्दैकदेशानुकरणमिदमिति बोध्यम् । "पतिः समास एव" । पाति रक्षति इति पतिः । 'पा, रक्षणे' इति धातोर्डतिप्रत्ययः । "शेषो घ्यसखि" इति सूत्रेण पतिशब्दस्य समासे च घिसंज्ञाप्राप्तौ सूत्रमिदं नियमार्थं, तेनोक्तशब्दस्य समासे एव घिसंज्ञा भवति नत्वसमासे । "डति च" । डतिः प्रत्ययः । ( 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्') इति परिभाषया तदन्तविधिः । "ष्णान्ता षट्" इत्यतः संख्येत्यनुवर्तते तदाह—डत्यन्ता संख्येति । डत्यन्तेति स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम् । "न लुमताङ्गस्य" । लुरस्यास्तीति लुमान् तेन लुमता । लुक्श्लुलुपो लुमन्तो बोध्याः । कतीति । का संख्या येषां ते कति । "किमः संख्यापरिमाणे डतिः" इत्यनेन किम् शब्दात् डति-

## त्रेस्त्रयः ७ । १ । ५३

[त्रे]स्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि प्रियत्रयाणाम् ॥

## त्यदादीनामः ७ । २ । १०२

एषामकारोऽन्तादेशः स्याद् विभक्तौ ॥ ( द्विपर्यन्तानामेवेष्टिः ) द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । पाति लोकमिति पपीः सूर्यः ॥

## दीर्घाज्जसि च ६ । १ । १०५

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । पप्यौ । पप्यः । हे पपीः । पपाम् । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये । पपीभ्यः २ । पप्यः २। पप्योः। दीर्घत्वान्न नुट् पप्याम् । ङौ तु सवर्णदीर्घः पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ।

## यू स्त्र्याख्यौ नदी १ । ४ । ३

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ('प्रथमलिङ्गग्रहणं च') पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥

## अम्बार्थनद्योर्ह्रस्वः ७ । ३ । १०७

---

प्रत्यये डित्त्वं इटेरम्भागस्य लोपे कतिशब्दो निष्पन्नः । "त्रेस्त्रयः" । सूत्रे त्रेरिति षष्ठी, न तु पञ्चमी त्रयादेशस्य स्थानिनिर्देशेन तस्यैव निर्णीतत्वात् । त्रय इत्यादेशो न सान्तोऽपित्वदन्त एव । प्रमाणञ्चात्र ("निजां त्रयाणाम्") इति निर्देश एव । निजां त्रयाणामिति निर्देशादेवाऽऽमि त्रयादेशसिद्धौ सूत्रमिदं व्यर्थीभूय ज्ञापयति—( अबाधकान्यपि निपातनानि भवन्ति ) इति तेन पुरातनमिति प्रयोगः सिध्यति । अन्यथा ( "पुराणप्रोक्तेषु" ) इति निपातनेन तस्य बाधः स्यात् । सूत्रेणाऽऽमादेशविधाने त्रिशब्दादाख्यानार्थे णिचि ततः क्विपि ("प्रकृत्यैकाच्")इति प्रकृतिभावाट्टिलोपाभावे तुकि निष्पन्नात् त्रितशब्दादामि अयमादेशो त्रयाणामिति रूपं न स्यादतो यथोक्त एवादेशो विधेय इति भावः । "त्यदादीनामः" । त्यद्शब्द आदिरवयवो येषां ते त्यदादयस्तेषां त्यदादीनाम् । तद्गुणसंविज्ञानोऽत्र बहुव्रीहिः । त्यदादिश्च सर्वाद्यन्तर्गणः। "यू स्त्र्याख्यौ नदी" स्त्रियमाचक्षाते स्त्र्याख्यौ । स्त्रियामित्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थं, तदाह—नित्यस्त्रीलिङ्गाविति। "अम्बार्थनद्योर्ह्रस्वः" । अम्बा रूपोऽर्थो यस्य सोऽम्बार्थः, स च नदी च अम्बार्थनद्यौ तयोः अम्बार्थनद्योः ।

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । हे बहुश्रेयसि ॥

### आण्नद्याः ७ । ३ । ११२

नद्यन्तात्परेषां ङितामाडागमः स्यात् ।

### आटश्च ६ । १ । ९०

आटोऽचि परे वृद्धिरेकादेशः स्यात् ॥ बहुश्रेयस्याः । बहुश्रेयसीनाम् ॥

### ङेराम्नद्याम्नीभ्यः ७ । ३ । ११६

नद्यन्तादाबन्तान्नीशब्दात्परस्य ङेराम् स्यात् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ॥

### अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥

### एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये । प्रध्यौ । प्रध्यम् । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् ? नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । नियः । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् ? सुश्रियौ यवक्रियौ ।

---

सम्बुद्धौ चेत्यनुवर्तते तदाह–सम्बुद्धाविति । हे बहुश्रेयसीति । अत्र गुणो नाशंक्यो ह्रस्वविधानसामर्थ्यात्तदप्रवृत्तेः । गुणस्येष्टत्वे सूत्रेण तस्यैव विधानौचित्यात् । न च गुणघटितसूत्रकरणे नास्ति लाघवमिति वाच्यम् ? ह्रस्वग्रहणे मात्राधिक्येन गुणे लाघवस्य सम्भवात् । "ह्रस्वस्य गुण" इत्युत्तरसूत्रे गुणग्रहणाकरणेनाऽपरस्यापि लाघवस्य सत्वाच्च । "आटश्च" । चतुर्थ्येकवचने ("वृद्धिरेचि") इत्यनेन पञ्चमीषष्ठ्येकवचने ङेरमि च सवर्णदीर्घेण च रूपसिद्धौ सूत्रमिदं व्यर्थमिति नाशङ्क्यम् । तस्यैन्दिददित्याद्यर्थमावश्यकत्वेन न्याय्यत्वादिहाप्युपन्यासात् । "ङेराम्नद्याम्नीभ्यः" । नदी च आप् च नीश्चेति नद्याम्नियस्तेभ्यो नद्याम्नीभ्यः । अतिलक्ष्मीरिति । लक्ष धातोरौणादिक ईप्रत्यये मुडागमे च कृते निष्पन्नस्य लक्ष्मीशब्दस्याऽतिशब्देन समासेऽतिलक्ष्मीशब्दो निष्पद्यते । अस्य ङ्यन्तत्वाभावात्सुलोपः उपसर्जनह्रस्वत्वं च न भवति इत्यभिप्रायेणैवाह ग्रन्थकारः–अङ्यन्तत्वान्न सुलोप इति । "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" । श्नुश्च धातुश्च भ्रूश्चेति श्नुधातुभ्रुवस्तेषां श्नुधातुभ्रु-

## गतिश्च १ । ४ । ६०

क्रियायोगे गतिसंज्ञाः स्युः ॥ (गतिकारकेतरपूर्वपदस्य यण् नेष्यते) शुद्ध·

## न भूसुधियोः ६ । ४ । ८५

एतयोरचि सुपि यण् न । सुधियौ सुधिय इत्यादि । सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ । सुत्यौ । सुख्युः । सुत्युः । शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः ॥

## तृज्वत्क्रोष्टुः ७ । १ । ९५

असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥

## ऋतो ङिसर्वनामस्थानयोः ७ । ३ । ११०

ऋदन्ताऽङ्गस्य गुणः स्याद् ङौ सर्वनामस्थाने च । इति प्राप्ते ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च ७ । १ । ९४

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६ । ४ । ११

अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टून् ॥

---

मम् । इयङ् च उवङ् च इयङुवङौ । "गतिश्च" । "प्रादयः" "उपसर्गाःक्रियायोगे" इति सूत्रद्वयानुवर्तनादाह–प्रादयः क्रियायोग इति । 'गतिकारकेतरपूर्वपदस्य' । गतिश्च कारकं च गतिकारके ताभ्यामितरद् पूर्वपदं यस्य तत् गतिकारकेतरपूर्वपदं तस्य । "न भूसुधियोः" । "एरनेकाच" इत्यतोऽचीत्यस्य यणश्चानुवर्तनम् । "ओः सुपि" इत्यतः सुपीत्यस्य च तदाह–अचि सुपि यणिति । सुतीरिति । सुतमिच्छतीति सुतीः सुतीयते क्यजन्तान्नामधातोः कर्तरि क्विप् । "तृज्वत्क्रोष्टुः" "सर्वनामस्थाने चासम्बुद्धौ" इत्यतोऽसम्बुद्धाविति सर्वनामस्थान इति चानुवर्तते त·दाह–असम्बुद्धाविति । "ऋतो ङिसर्वनामस्थानयोः" । अत्र "ऋत" इति सूत्रस्थं षष्ठ्यन्तपदं विशेषणम् । अङ्गस्येत्यधिकृतं पदं विशेष्यं "येन विधिः" इति तदन्तविधिः । "जसि च" इत्यतो गुणपदानुवृत्तिस्तदाह–ऋदन्ताङ्गस्य गुण इति । "अप्तृन्तृच्स्वसृनप्तृ" । अत्राऽव्युत्पत्तिपक्षाश्रयणे नप्त्रादिग्रहणं सार्थकम् । व्युत्प·

## विभाषा तृतीयादिष्वचि ७ । १ । ९७

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ॥

## ऋत उत् ६ । १ । १११

ऋतो ङसिङसोरति उकार एकादेशः स्यात् । रपरः ॥

## रात्सस्य ८ । २ । २४

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः । क्रोष्टोः (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन) क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वौ । हूह्वः । हूहूम् इत्यादि । अतिचमूः । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् । खलपूः ॥

## ओः सुपि ६ । ४ । ८३

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ । खलप्वः । एवं सुल्वादयः । स्वभूः । स्वभुवौ । स्वभुवः । वर्षाभूः ॥

## वर्षाभ्वश्च ६ । ४ । ८४

अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि । दृन्भूः (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ । एवं करभूः । धाता । हे धातः । धातारौ । धातारः (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ ॥

---

त्तिपक्षाश्रयेण तु तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घसिद्धौ नप्त्रादिग्रहणं नियमार्थं बोध्यम् । इत्थं हि नियमाकारः—उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां चेद्दीर्घस्तर्हि नप्त्रादीनामेव नान्येषां संज्ञाशब्दानामिति । "ऋत उत्"। "ङसिङसोश्च" इति सूत्रम्, "एङः पदान्तादति" इत्यतोऽति चानुवर्तते तदाह—"ऋतो ङसिङसोरतीति । "रात्सस्य" । "संयोगान्तस्य लोप" इति सूत्रानुवृत्तिः । संयोगान्तलोपेनैव सिद्धौ सूत्रमिदं नियमार्थम् । नियमाकारश्च रेफात्परस्य संयोगान्तस्य लोपश्चेत्तर्हि सस्यैव नान्यस्येत्येवं रूपः । नुमचिरेति । नुम उदाहरणं—वारीणाम् । अचिर उदाहरणं—तिसृणाम् । तृज्वद्भावस्योदाहरणं—क्रोष्टूनाम् । अतिचमूरिति । चमूमतिक्रान्तोऽतिचमूः । "ओः सुपि" । "एरनेकाचोऽसंयोगपूर्वस्य" इति सूत्रमेरितिपदरहितमनुवर्तते तदाह—धात्ववयवेति । वर्षाभूरिति । मण्डूकस्येयं संज्ञा तदुक्तममरकोशे-

## नृ च ६ । ४ । ६

...आमि वा दीर्घः स्यात् । नृणाम् , नृणाम् ॥

## गोतो णित् ७ । १ । ९०

ओकाराद्विहितं सर्वनामस्थानं णिद्वत् स्यात् । गौः । गावौ । गावः ॥

## औतोऽम्शसोः ६ । १ । ९३

ओतोऽम्शसोरचि आकार एकादेशः स्यात् । गाम् । गावौ । गाः । गवा । गवे । गोः २ । इत्यादि ॥

## रायो हलि ७ । २ । ८५

रैशब्दस्याऽऽकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्ताः पुंलिङ्गाः ॥

# अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा ॥

## औङ आपः ७ । १ । १८

आबन्तादङ्गात् परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः

## सम्बुद्धौ च ७ । ३ । १०६

आप एकारः स्यात्सम्बुद्धौ । "एङ्ह्रस्वात्" इति सम्बुद्धिलोपः । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥

---

'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इति । "नृ च" "छन्दस्युभयथा" इत्यत उभयथेत्यस्याऽनुवर्तनादाह–वा दीर्घः स्यादिति । "गोतो णित्" । अत्र गकारमपहाय "ओतो णित्" इत्येव सूत्रमुचितम् । तेन द्योः द्यावावित्यादिसिद्धिः । औतोऽम्शसोरिति । अत्रापि आ ओत इति छेदः । रमेति । रमते इति रमा रमतेः पचाद्यच् टाप् । आबन्तत्वात् "हल्ङ्याब्भ्य इति" सुलोपः । "सम्बुद्धौ च" । "आङि चापः" इत्यत आपोऽनुवृत्तिः । "बहुवचने झल्येत्" इत्यत एतश्चानुवृत्तिस्तदाह–आप एकार इति । रमाः । द्वितीयाबहुवचनान्तमिदम् । "तस्माच्छसो नः पुंसि" इत्यत्र पुंसीति

## आङि चापः ७ । ३ । १०५

आङि ओसि चाप एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ॥

## याडापः ७ । ३ । ११३

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिः । रमायै । रमाभ्याम् । रमा-भ्यः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाम्बिकादयः ॥

## सर्वनाम्नः स्याड्ढ्रस्वश्च ७ । ३ । ११४

आवन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः । सर्वासा-म् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आबन्ताः ॥

## विभाषा दिक्समासे बहुव्रीहौ १ । १ । २८

अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै, उत्तरपूर्वायै (तीयस्येति वा संज्ञा ।) द्वि-तीयस्यै । एवं तृतीया । अम्बार्थेति ह्रस्वः । हे अम्ब । हे अक्क । अल्ल । जरा । जरसौ इत्यादि । पक्षे हलादौ च रमावत् । गोपा विश्वपावत् । मतिः । मत्या ॥

## ङिति ह्रस्वश्च १ । ४ । ६

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै । मतये । मत्याः २ । मतेः २ ।

## इदुद्भ्याम् ७ । ३ । ११७

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम् स्यात् । मत्याम् । मतौ । शेषं हरिवत् । एवं बुद्ध्यादयः ।

---

पदसङ्ख्यावात्पुंल्लिङ्ग एव शसो विधानाच्च तु स्त्रीलिङ्गेऽतो नात्र नत्वमिति भावः । "आ-ङि चापः" । "ओसि च" इत्यस्यानुवृत्तेः "बहुवचने झल्येत्" इत्यस्मादेतश्चा-नुवृत्तिस्तदाह–आङि ओसि चेत्यादि । "याडापः" । अत्र "घेर्ङिति" इत्यतोऽनुवृत्तस्य ङितीति सप्तम्यन्तस्य आप इति पञ्चम्यनुरोधात्षष्ठ्या विपरिणामस्त-दाह—आपः परस्य ङिद्वचनस्येति । 'तीयस्येति वा संज्ञा' (विभाषा-प्रकरणे तीयस्य ङित्सूपसंख्यानम्) इति वार्तिकस्वरूपम् । तीयप्रत्ययान्तस्य ङित्सु विभक्तिषु विषये विभाषा सर्वनामसंज्ञेति तदर्थः । "ङिति ह्रस्वश्च", "(वामि)" इति सूत्राद्वेत्यस्यानुवर्तनाद्विकल्पनदीसंज्ञाविधानम् । ह्रस्वयोरप्राप्तौ दीर्घयोः (नेयङुवङौ) इति निषेधप्राप्तावेतस्याऽऽरम्भादियमप्राप्तविभाषेति बोध्यम् । अत्रेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविस्येतत्त्रयं दीर्घांशे विशेषणम् । ह्रस्वांशे तु केवलं स्त्रि-

**त्रिचतुरोः स्त्रियां तिसृचतसृ ७ । २ । ९९**

...योरेतयोरेतौ स्तो विभक्तौ ।

**अचि र ऋतः ७ । २ । १००**

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः । ...तस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । तिसृभ्यः । आमि नुट् ॥

**न तिसृचतसृ ६ । ४ । ४**

एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । तिसृषु । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । गौरी । गौर्यौ । गौर्यः । हे गौरि । गौर्यौ इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री ॥

**स्त्रियाः ६ । ४ । ७९**

अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥

**वाऽम्शसोः ६ । ४ । ८०**

अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । स्त्रिया ।

---

यामित्येव विशेषणं न तु नित्यास्त्रीत्वपर्यन्तम् । अस्यापि तत्र विशेषणत्वाभ्युपगमे उ- भयलिङ्गवतामिष्वशनिप्रभृतीनां सर्वलिङ्गवतां पटुमृदुप्रभृतीनां च शब्दानां नदीत्वाना- पत्तिः । तेषां कैयटमतसिद्धनित्यस्त्रीत्वाभावात् । मतान्तरेऽपि ह्रस्वांशे नित्यग्रहणस्या- व्यावर्त्यालाभाच्च । "त्रिचतुरोः स्त्रियां तिसृचतसृ" । त्रयश्च चत्वारश्च -त्रिचतुरौ तयोस्त्रिचतुरोः । शब्दद्वयाभिप्रायेण द्विवचननिर्देशः । 'तिसृचतसृ' इति लुप्त- विभक्तिकम् अतोऽविभक्त्यन्तस्य प्रयोगोऽनर्ह इति शङ्कावसरो नेति भावः । गुण- दीर्घोत्वानामपवादः । तिस्रः सन्तीत्यत्र "ऋतो ङिसर्वनामस्थानयोः" इति प्रा- प्तगुणस्य रत्वमपवादः । तिस्रः पश्यन्तीत्यत्र 'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्याऽप- वादः । प्रियतिस्रः स्वमित्यत्र "ऋत उत्" इत्यनेन प्राप्तस्योत्वस्य बाधः । द्वे । "त्य- दादीनामः" इत्यनेनाऽत्वेऽदन्तत्वात् "अजाद्यतष्टाप्" इत्यतष्टापि औङः श्यादेशे गुणे च सिद्धिरिति भावः । हे गौरि । "अम्बार्थनद्योर्ह्रस्वः" इत्यनेन ह्रस्वे "एङ्ह्रस्वादिति" सुलोपे च रूपम् । स्त्री । स्त्यायतः शुक्रशोणितेऽस्या- मिति स्त्री । स्त्यायतेर्ड्रट् । डित्वाट्टिलोपः । टित्वान्ङीप् । ङ्यन्तत्वात्सुलोपः । "वाऽम्शसोः" । अम् च शस् च अम्शसौ तयोरम्शसोः । अत्र "स्त्रियाः" इति सूत्रात् स्त्रिया इति इयङिति चानुवर्तते तदाह—अमि शसि च स्त्रिया इय-

स्त्रियै । स्त्रियाः । परत्वान्नुट् स्त्रीणाम् । स्त्रीषु । श्रीः । श्रियौ । श्रियः ॥

## नेयङुवङ्स्थानावस्त्री १ । ४ । ४

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रिये । श्रियाः । श्रियः ॥

## वामि १ । ४ । ५

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम्, श्रियाम् । श्रियि, श्रियाम् । धेनुर्मतिवत् ॥

## स्त्रियां च ७ । १ । ९६

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥

## ऋन्नेभ्यो ङीप् ४ । १ । ५

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री । गौरीवत् । भ्रूः श्रीवत् । स्वयम्भूः पुंवत् ॥

## न षट्स्वस्रादिभ्यः ४ । १ । १०

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः

स्वसा । स्वसारौ । माता पितृवत् । शसि मातॄः । द्यौर्गौवत् । राः पुंवत् । नौर्ग्लौवत् ॥

इत्यजन्ताः स्त्रीलिङ्गाः ।

---

ङिति । स्त्रियमतिक्रान्तोऽतिस्त्रिरित्यत्रेयङ्विधाने इत्थं निर्णयः—गुणनाभावौस्त्वनुड्भिः परत्वात्पुंसि बाध्यते । क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् । ओत्योकारे च नित्यं स्यादमूशसोस्तु विभाषया । इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥ "नेयङुवङ्स्थानावस्त्री" । इयङ् च उवङ् च इयङुवङौ । तिष्ठतो ययोरिति स्थानौ । यङुवङोः स्थानौ इयङुवङ्स्थानौ । तदाह—इयङुवङोः स्थितिर्ययोरिति । हे श्रीः । अव्ययन्तत्वान्नात्र सुलोपः । तदुक्तम्-अवी तन्त्री तरी लक्ष्मी धी ह्री श्रीणामुदाहृता । सप्तानामपि शब्दानां सुलोपो न कदाचन । "ऋन्नेभ्यो ङीप्" । ऋद् ऋकारः । न नकारः । ताभ्यां प्रातिपदिकमधिकृतं विशेष्यमादाय तदन्तविधिः । स्त्रियामिति चाधिक्रियते तदाह—ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियामिति ।

# अथाजन्तनपुंसकलिङ्गप्रकरणम् ॥

## अतोऽम् ७ । १ । २४

अतोऽङ्गात् क्लीवात्स्वमोरम् स्यात्। "अमिपूर्वः" ज्ञानम् । "एङ्ह्रस्वात्" इति हल्मात्रलोपः । हे ज्ञान ॥

## नपुंसकाच्च ७ । १ । १९

क्लीवादौङः शी स्यात् । भसंज्ञायाम् ॥

## यस्येति च ६ । ४ । १४८

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः स्यात् । इत्यलोपे प्राप्ते ( औङः श्यां प्रतिषेधः ) ज्ञाने ॥

## जश्शसोः शिः ७ । १ । २०

क्लीवादनयोः शिः स्यात् ॥

## शि सर्वनामस्थानम् १ । १ । ४२

शि इत्येतदुक्तसंज्ञं स्यात् ॥

## नपुंसकस्य झलचः ७ । १ । ७२

---

"अतोऽम्" । "स्वमोर्नपुंसकात्" इति सूत्रन्तत्रानुवृत्तमङ्गादिति च वर्तते तदाह- अतोऽङ्गादिति । अङ्गादिति विशेष्यं विशेषणीभूतादत इत्यस्मात्तदन्तविधावदन्ताद- ङ्गादित्यर्थो बोध्यः । हे ज्ञानेति । सम्बुद्ध्याक्षिप्ताङ्गपदार्थस्यैङ्ह्रस्वाभ्यां विशेषणत्वे फलमिदम् । "नपुंसकाच्च" । "औङ आपः" इत्यत औङ इत्यस्य "जशः शी" इत्यतः शीत्यस्य चानुवृत्तिस्तदाह—औङः शीति । भसंज्ञायामिति । नपुंस- कादिहितस्यौङोऽसर्वनामस्थानत्वेन तत्स्थानिकश्यादेशस्याप्यसर्वनामस्थानत्वेन "यचि- भम्" इति भसंज्ञायामिति तदर्थः । "यस्येति च" । इश्च अश्च यं तस्य यस्य । सूत्रे ईतिशब्द ईकारार्थकः ।, "नस्तद्धिते" इत्यतस्तद्धिते इत्यस्यानुवृत्तिस्तदाह-ईकारे त- द्धिते चेति । "जश्शसोः शिः"। जश्च शश्च जश्शसौ तयोः जश्शसोः । अत्र "न- पुंसकाच्च" इति सूत्रेण नपुंसकादित्यस्य सम्बन्धादाह—क्लीबादिति । जशा साहच- र्येण सुप एव शसो ग्रहणं नतु तद्धितस्य शसोऽत एव कुण्डशो ददातीत्यादौ श्यादेशो न । "नपुंसकस्य झलचः" । झल् च अच्चेत्यनयोः समाहारद्वन्द्वे झलचं तस्य। 'इदितो नुम्धातोः" इत्यतो नुमः, 'उगिदचां सर्वनामस्थाने" "सर्वनामस्थाने चास-

झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥

**मिदचोऽन्त्यात्परः १ । १ । ४७**

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥ उपधा-
यानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः ॥

**अद्ड् डतरादिभ्यः पञ्चभ्यः ७ । १ । २५**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥

**टेः ६ । ४ । १४३**

डिति परे भस्य टेर्लोपः स्यात् । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत्। एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । ( एकतरात्प्रतिषेधो वक्तव्यः ) एकतरम् ॥

**ह्रस्वो नपुंसके प्रातिपदिकस्य १ । २ । ४७**

क्लीबे प्रातिपदिकस्याजन्तस्य च ह्रस्वः स्यात् । श्रीपम् । ज्ञानवत् ॥

**स्वमोर्नपुंसकात् ७ । १ । २३**

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ॥

**इकोऽचि विभक्तौ ७ । १ । ७३**

इगन्तस्य क्लीबस्य नुम् स्यादचि विभक्तौ। वारिणी । वारीणि । "न लुमताऽङ्गस्य-

---

स्युद्धौ" इत्यस्य चानुवृत्तिः । अङ्गस्याधिकारः तथाच-विशेष्यभूतं नपुंसकमङ्ग-मादाय विशेषणीभूताभ्यां झलज्भ्यां "येन विधिस्तदन्तस्य" इति तदन्तविधिस्त-दाह-झलन्तस्याजन्तस्य चेति । "अद्ड् डतरादिभ्यः पञ्चभ्यः" । स्वरू-पभेदभङ्गभिया नात्र ष्टुत्वसंयोगान्तलोपौ । डतर आदिर्येषां ते डतरादयस्तेभ्यो ड-तरादिभ्यः । डतरडतमेतरान्यान्यतरेतिसर्वादिपठितेभ्य इत्यर्थः । नेमं तिष्ठति नेमं पश्येत्यत्र स्वमोरद्डादेशाभावाय सूत्रे पञ्चभ्य इत्यस्य ग्रहणम् । "स्वमोर्नपुंसकात्" इत्यनुवर्तते, तत्र नपुंसकादित्येकवचनान्तस्य डतराद्यनुरोधाद्बहुवचनान्ततया विपरि-णामस्तदाह—एभ्यः क्लीबेभ्य इति । "टेः" "तिविंशतेर्डिति" इत्यतो डितीत्यनु-वर्तते । लोप इति चानुवर्तते । भस्येत्यधिकारस्तदाह—डिति परे भस्येति । अ-न्यतमशब्दस्य त्वन्यतममित्येव । अयमन्यतमशब्दो नाऽन्यशब्दप्रकृतिकडतम-प्रत्ययान्तोऽपित्वखण्डप्रातिपदिकमिदम् । अतोऽस्माद्विहितस्वमोरद्डादेशाभावाद-मादेशे कृतेऽन्यतममित्येवेति भावः । न लुमतेत्यस्यानित्यत्वपक्षे । अस्यानि-



... सम्बुद्धिनिमित्तो गुणः हे वारे, हेवारि । आङो ना । वारिणा । "घेर्ङि-
...ग्रासे (वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन ) वारिणे । वारि-
... । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७ । १ । ७५**

एषामनङ् स्यात् टादावचि स चोदात्तः ॥

**अल्लोपोऽनः ६ । ४ । १३४**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् । दध्ना । दध्ने । दध्नः । दध्नोः । दध्नाम् ॥

**विभाषा ङिश्योः ६ । ४ । १३६**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि, दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि । सुधिना । सुधीनि । हे सुधे , हे सुधि ॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । ७ । १ । ७४**

---

स्यत्वे प्रमाणं तु "इकोऽचि विभक्तौ" इत्यत्राज्ग्रहणम् । तथा हि—अचीत्यस्याभावे हलादौ सुपि सत्यपि नलोपेन सिद्धेः । "न ङि सम्बुद्ध्योः" इति निषेधेन सम्बुद्धौ नलोपानापत्तिर्नाशङ्क्या तत्र लुक्शब्देन सम्बुद्धेर्लुप्तत्वेन प्रत्ययलक्षणाभावान्नुमः सुतरामप्राप्तेः । अतो व्यर्थमज्ग्रहणमुक्तसूत्रस्यानित्यत्वे ज्ञापकम् । वृद्ध्यौत्वतृज्वद्भाव । अतिसखीनित्यत्र "सख्युरसम्बुद्धौ" इति णिद्वद्भावेन वृद्धिः प्राप्नोति । वारिणीत्यत्र "अच्च घेः" इत्यौत्वम्प्राप्नोति । प्रियक्रोष्टुनीत्यत्र तृज्वद्भावः प्राप्नोति । वारिणे वारिण इत्यादौ "घेर्ङिति"इत्यनेन गुणः प्राप्नोति सर्वं बाधित्वा नुम्भवतीत्यर्थः । "अस्थिदधिसक्थ्यक्ष्णाम्" अस्थि च दधि च सक्थि च अक्षि च एषामितरेतरद्वन्द्वः अस्थिदधिसक्थ्यक्षीणि तेषाम् । "तृतीयादिषु भाषितपुंस्कम्" इत्यतस्तृतीयादिष्विति अचीति चानुवर्तते तदाह–टादावचीति । अल्लोऽपोऽनः' । भस्येत्यधिक्रियते तेनाक्षिप्तः सर्वो भसंज्ञानिमित्तकः प्रत्ययः । अङ्गस्येत्युभयमनो विशेषणम् । अन् चाऽकारस्य विशेषणमित्याशयेनाह–अङ्गावयव इत्यादि । "विभाषा ङिश्योः" । ङिश्च शी च ङिश्यौ तयोः ङिश्योः । "अल्लोपोऽनः" इति सूत्रोक्तादिशैवाऽस्याऽप्यर्थलाभो बोध्यः । सुधीति । सुष्ठु ध्यायति यत् कुलं तत् सुधि । अथ वा सुष्ठु शोभना धीर्यस्य कुलस्य तत् सुधि कुलम् । "तृतीयादिषु भाषितपुंस्कम्" । नात्र भाषि तः

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्यात् टादावचि । सुधिना, सुधिनेत्यादि । मधु । मधुनी । मधूनि । हे मधो । हे मधु । सुलु । सुलुनी ... सुल्वा, सुलुनेत्यादि । धातृ । धातृणी धातृणि । हे धातः, हे धातृ । धात्रे ... धातृणाम् । एवं ज्ञात्रादयः ॥

**एच इग्घ्रस्वादेशे १ । १ । ४८**

आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

# अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

**हो ढः ८ । २ । ३१**

हस्य ढः स्याज्झलि पदान्ते च । लिट्, लिड् । लिहौ । लिहः । लिड्भ्याम् । लिट्सु, लिट्त्सु ॥

---

पुमान् येन शब्देनासौ भाषितपुंस्क इति पीलुने इत्यादावपि पुंवद्भावापत्तिः किन्तु भाषितः पुमान् यस्मिन्नर्थे तत् भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति अर्शआदित्वादच् । तदाह—प्रवृत्तिनिमित्तैक्य इति । एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तद्वा पुंवदिति तदर्थः । उक्तं हि भाषितपुंस्कलक्षणं यथा—यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । क्लीबवृत्ते तदेव स्यादुक्तपुंस्कं तदुच्यते ॥ प्ररीति । प्रकृष्टो रा यस्य कुलस्य तत्प्ररि कुलम् । "एच इग्घ्रस्वादेशे" । आदिश्यत इत्यादेशः ह्रस्वश्चासावादेशो ह्रस्वादेशस्तस्मिन् । निर्धारणे सप्तमीयम्, जात्यभिप्रायेणैकवचनमतो व्याचष्टे—आदिश्यमानेष्विति । एकदेशविकृतमिति । एकदेशे एकावयवे विकृतं विकारयुक्तं यत् तत् अन्यवत् अन्यसदृशो न भवति । विकारश्च न्यूनमाधिक्यं वा यथा पुच्छहीनः श्वा श्वैव नत्वश्वो न गर्दभस्तथाऽयमपि प्ररिशब्दः प्रैरशब्द एव न तु तदन्योऽतो नात्वे कापि बाधेति भावः । "हो ढः" । अत्र "झलो झलि" इत्यतो झलीति वर्तते, पदस्येत्यधिक्रियते, "स्कोः संयोगाद्योरन्ते च" इति सूत्रादन्ते इति च वर्तते तदाह—झलि पदान्ते चेति । झलि परतः पदान्ते वा विष-

## दादेर्धातोर्घः ८ । २ । ३२

[उपदेशे दाद]न्ते चोपदेशे दादेर्धातोर्हस्य घः स्यात् ॥

## [ए]काचो बशो भष् झषन्तस्य स्ध्वोः ८ । २ । ३७

धात्ववयवस्यैकाचो झषन्तस्य बशो भष स्यात् से ध्वे पदान्ते च । धुक्, धुग्। दुहौ । दुहः । धुग्भ्याम् । धुक्ष ॥

## वा द्रुहमुहष्णुहष्णिहाम् ८ । २ । ३३

एषां हस्य वा घः स्यात् झलि पदान्ते च । ध्रुक् ध्रुग् ध्रट्, ध्रुड् । द्रुहः । ध्रुड्भ्याम् । ध्रुक्षु ध्रुट्सु ध्रुट्त्सु । एवं मुह् ॥

## धात्वादेः षः सः ६ । १ । ६४

धातोरादेः षस्य सः स्यात् । स्नुट्, स्नुड्, स्नुक्, स्नुग् । एवं स्निह् ॥

## इग्यणः सम्प्रसारणम् १ । १ । ४५

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ॥

## वाह ऊठ् ६ । ४ । १३२

भस्य वाहः सम्प्रसारणमूठ् स्यात ॥

---

मानस्य हस्य ढत्वमित्यर्थः। दादेर्धातोर्घः" । अत्र दादिपदमौपदेशिकदादित्वबदुप-लक्षकम् । "होढः" इत्यतो हस्य झलि पदान्ते चेति पदत्रयानुवृत्तिस्तदाह—उपदेश इत्यादि । "एकाचो बशो" । एकाच इत्यत्र "दादेर्धातोः" इत्यतोऽनुवृत्तस्य दा-दिपदस्य वैयधिकरण्येनान्वयस्तदाह—धात्ववयवस्यैकाच इति। अत्र स्ध्वं ग्रहणसा मर्थ्याज्झलीति न सम्बध्यते । तेन दुग्धं दाग्धरयादौ भष्भावो न । "वा द्रुहमुह ष्णुहष्णिहाम्" । द्रुहश्च मुहश्च स्नुहश्च स्निह् चैतेषामितरेतरद्वन्द्वो द्रुहमुहष्णुहष्णिहस्ते-षाम्। द्रुहेः पूर्वसूत्रतो घत्वं प्राप्तमितरांशे तदप्राप्तमितीयं प्राप्ताप्राप्तविभाषा । "दादेर्धा-तोर्घः" इत्यतो हस्य घो झलि पदान्ते चेतिपदसमुदायस्यानुवृत्तिस्तदाह—एषां हस्य वा घ इत्यादि । "वाह ऊठ्" । भस्येत्यधिक्रियते तच्च वाहो विशेषणम् "वसोः सम्प्रसारणम्" इत्यतः सम्प्रसारणमिति वर्तते तदाह—भस्य वाहः सम्प्रसारणमि-ति । अत्राट्ग्रहणाभावेऽपि सम्प्रसारणमात्रस्यैव विधानात्पूर्वरूपोत्तरं लघूपधगुणे "वृ-द्धिरेचि" इति वृद्धौ विश्वौह इत्यादिसिद्धावूठ्ग्रहणं व्यर्थीभूय बहिरङ्गपरिभाषां ज्ञापय-ति । तथा च—अन्तरङ्गलघूपधगुणदृष्ट्या बहिरङ्गसम्प्रसारणस्यासिद्धत्वादुक्तप्रयोगाऽसि-

## सम्प्रसारणाच्च ६ । १ । १०८

सम्प्रसारणादचि पूर्वरूपमेकादेशः स्यात् । वृद्धिः । विश्वौहः । इत्यादि

## चतुरनडुहोराम्रुदात्तः ७ । १ । ९८

अनयोराम् स्यात्सर्वनामस्थाने परे ॥

## सावनडुहः ७ । १ । ८२

अस्य नुम् स्यात् सौ परे । अनड्वान् ॥

## अम् सम्बुद्धौ ७ । १ । ९९

चतुरनडुहोरम्स्यात्संबुद्धौ । हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहः । अनडुहा ॥

## वसुस्रंसुध्वंस्वनडुहां दः ८ । २ । ७२

---

श्याऽऽवश्यकमूठ्ग्रहणमिति भावः । "सम्प्रसारणाच्च" । "इको यणचि" इत्यतोऽचीति "एकः पूर्वपरयोः" इत्यत एक इति, "आमि पूर्वः" इत्यतःपूर्व इति च वर्तन्ते तदाह—सम्प्रसारणादचीत्यादि । "चतुरनडुहोरामुदात्तः" । चत्वारश्चाऽनड्वांश्च चतुरनडुहौ तयोः । "इतोऽत् सर्वनामस्थाने" इत्यतः सर्वनामस्थान इत्यस्यानुवर्तनादाह—सर्वनामस्थाने पर इति । "सावनडुहः" । "आच्छीनद्योर्नुम्" इत्यत आत् नुम् इति च पदद्वयानुवृत्तिः । "शप्श्यनोर्नित्यम्" इत्यतो नित्यमित्यनुवर्तते तदाह—अस्य नुम् स्यादिति । अनड्वानिति । नुमो मित्वादन्त्यादचः परत्वेन आमश्चान्तावयवत्वेन विधानात् विशेषविहितेनापि नुमा नामो बाधः, परत्वादामापि न नुमो बाधः । उपजीव्यविरोधस्यान्याय्यत्वेन उपजीव्योपजीवकभावापन्नयोर्न परस्परबाध्यबाधकभावो भवति पितापुत्रयोरिव । आम् उपजीव्यो नुम् उपजीवकः । उपजीवयतीति उपजीव्यः । उपजीवतीति उपजीवक इति द्वयोर्विग्रहः । अनड्वानित्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । "अम् सम्बुद्धौ" । "चतुरनडुहोरामुदात्तः' इत्यतश्चतुरनडुहोरित्यनुवृत्तेराह चतुरनडुहोरिति । अनड्वन्नित्यत्र "न ङिसम्बुद्ध्योः" इति निषेधान्नलोपो न । "वसुस्रंसुध्वंस्वनडुहां दः" । वसुश्च स्रंसुश्च ध्वंसुश्च अनड्वांश्चेषामितरेतरद्वन्द्वो वसुस्रंसुध्वंस्वनडुहस्तेषाम् । "ससजुषो रुः" इत्यतोऽनुवृत्तं स इति लुप्तषष्ठ्यन्तं वसोरेव विशेषणं विद्वांस इत्यादौ सम्भवात् विद्वानित्यादौ व्यभिचारात् ( सम्भवव्यभिचाराभ्यां स्याद्विशेषणम-

... वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति ...न् । पदान्ते किम् ? स्रस्तम् । ध्वस्तम् ॥

**सहेः साडः सः ८ । ३ । ५६**

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् तुराषाड् ॥ तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ॥

**दिव औत् ७ । १ । ८४**

दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः । सुदिवौ ॥

**दिव उत् ६ । १ । १३१**

दिवोऽन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्याम् इत्यादि । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ॥

**षट्चतुर्भ्यश्च ७ । १ । ५५**

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात् ॥

**रषाभ्यां नो णः समानपदे ८ । ४ । १**

एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् समानपदे ॥

**अचो रहाभ्यां द्वे ८ । ४ । ४६**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्ण्णाम् , चतुर्णाम् ॥

---

र्थवत् ) इत्याद्यभियुक्तोक्तेः । न तु संबुद्धेस्वोर्विशेषणम् अव्यभिचारात् , अनडुहोऽपि न विशेषणमसम्भवात् । तथाच—"येन विधिस्तदन्तस्य" इति तदन्तविधिस्तदा सान्तवस्वन्तस्येति । "सहेः साडः सः" । अत्र सहेरित्यस्याग्रहणे साडः सस्य मूर्द्धन्यादेश इत्यर्थे सह डेन वर्तते इति सडस्तस्यापत्यं साडिस्तमाचष्टे णिचि क्विपि साट् साडित्यत्र मूर्द्धन्यादेशापत्तिस्तन्निवृत्यर्थं सूत्रे सहेरित्यस्योक्तिरावश्यिका । "दिव औत् । अत्र "सावनडुहः"इत्यतः साविति अनुवर्तते । (निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम् ) इति परिभाषया निरनुबन्धकस्यौणादिकस्यैव दिवो ग्रहणं न तु सानुबन्धकस्य धातुपाठपठितस्य दिवुइत्यस्येत्याशयेनाह—दिविति प्रातिपदिकस्येत्यादि । "दिव उत्" । दिवः षष्ठ्यन्तत्वादलोऽन्त्यपरिभाषयाऽन्त्यस्थाने भवतीत्याह—दिवोऽन्तादेश इति । "एङः पदान्तादति" इत्यतोऽनुवृत्तस्य पदान्तादिति पञ्चम्यन्तस्य सप्तम्यन्ततया विपरिणामादाह—पदान्त इति । "षट्चतुर्भ्यश्च" "अनचि च" इत्यतो यरो वेति पदद्वयानुवृत्तेराह—यरो द्वे वा स्त

रोः सुपि ८ । ३ । १६

सप्तमीबहुवचने रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते ॥

शरोऽचि ८ । ४ । ४९

अचि परे शरो न द्वे स्तः । चतुर्षु ॥

मो नो धातोः ८ । २ । ६४

धातोर्मस्य नः स्यात् पदान्ते । प्रशान् ॥

किमः कः ७ । २ । १०३

किमः कः स्यात् विभक्तौ । कः । कौ । के इत्यादि । शषं सर्ववत् ॥

इदमो मः ७ । २ । १०८

इदमो मस्य मः स्यात् सौ परे । त्यदाद्यत्वापवादः ॥

इदोऽय् पुंसि ७ । २ । १११

इदम इदोऽय् स्यात् सौ पुंसि । अयम् । त्यदाद्यत्वे ॥

अतो गुणे ६ । १ । ९७

अपदान्तादतो गुणे पररूपमेकादेशः स्यात् ॥

दश्च ७ । २ । १०९

---

इति । "रोः सुपि" । "खरवसानयोः" इत्येव विसर्गसिद्धौ सूत्रमिदं व्यर्थं सन्नियमार्थमित्याह—सप्तमीबहुवचने रोरेवेति । अत्र खरवसानयोर्विसर्जनीय इत्यतो विसर्जनीय इत्यस्य सम्बन्धस्तदाह—विसर्गः सुपीति । षत्वमिति । "आदेशप्रत्यययोः" इत्यनेनेति शेषः। षस्य द्वित्वे प्राप्त इति । "अचो रहाभ्याम्" इत्यनेनेति शेषः । "शरोऽचि" । "नादिन्याक्रोशे पुत्रस्य" इत्यतो नेति "अचो रहाभ्याम्" इत्यतो द्वे इति चानुवर्तते तदाह—न द्वे स्त इति । प्रशानिति । प्रोपसृष्टात् 'शम, उपशमे' इत्यस्मात्क्विपि "अनुनासिकस्य क्विझलोः क्ङिति" इत्यनेन दीर्घे प्रशाम्शब्दो निष्पन्नः । प्रकर्षेण शाम्यतीति विग्रहो बोध्यः । "किमः कः" । "अष्टन आ विभक्तौ" इत्यतो विभक्तावित्यनुवर्तते तदाह—विभक्ताविति । आदेशे ककारोच्चारणं साकच्कस्यापि किमः कादेशार्थम्। 'कायतेर्डिमु' इत्यौणादिकसूत्रेण कै धातोर्डिमुप्रत्यये कृते किम्शब्दो निष्पन्नः। "इदमो मः" । "तदोः सः सौ" इत्यतः साविस्यनुवर्तते तदाह—साविति । ( इन्देः कमिर्नलोपश्च ) इत्यौणादि-



इदं... य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ॥

## अनाप्यकः ७ । २ । ११२

...रस्येदम इदोऽन् स्याद्टापि विभक्तौ । आविति टा इत्यारभ्य सुपः पकारेण ...हारः । अनेन ॥

## हलि लोपः ७ । २ । ११३

अककारस्येदम इदो लोपः स्यादापि हलादौ । (+ नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे + ) ॥

## आद्यन्तवदेकस्मिन् १ । १ । २१

एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् । "सुपि च" इति दीर्घः । आभ्याम् ॥

## नेदमदसोरकोः ७ । १ । ११

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥

## द्वितीयाटौस्स्वेनः २ । ४ । ३४

द्वितीयायां टौसोश्च परतः इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा 'अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति' । 'अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति' । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः । राजा ॥७

## न ङिसम्बुद्ध्योः ८ । २ । ८

---

१सूत्रेण 'इदि, परमैश्वर्ये' अस्मात्कम्प्रत्यये नलोपे च इदम्शब्दो निष्पन्नः । 'त्यदादेः सम्बोधनं नास्तीत्युत्सर्ग' इति । लौकिकव्यवहारानुपयोगित्वेन त्यदादीनां सम्बोधनाभाव इति तदर्थः । शास्त्ररीत्या विवक्षासद्भावे भवत्येव सम्बोधनम् । अत एव "तदोः सः सावनन्त्ययोः" इति सूत्रस्थम् 'अनन्त्ययोरिति किम् ? हे स' इति भाष्यं सङ्गच्छते । "आद्यन्तवदेकस्मिन्" । आदिश्चान्तश्चाऽऽद्यन्तौ तयोरिव आद्यन्तवत् सप्तम्यन्ताद्वतिः । एकस्मिन्नित्यस्यासहाय इत्यर्थः । असहायत्वं च विवक्षितधर्मप्रयोजकवर्णान्तरशून्यत्वरूपम् । द्वितीयाटौस्स्विति । द्वितीया च टा च ओस् चैतेषामितरेतरद्वन्द्वः द्वितीयाटौस्स्तेषु । "इदमोऽन्वादेशे" इत्यत इदम इति अन्वादेश इति चानुवर्तते । "एतदस्त्रतसोः" इत्यत एतदिति च तदाह—इदमेतदोरेना-

नस्य लोपो न स्यात् ङौ सम्बुद्धौ च। हे राजन्। (ङावुत्तरपदे प्र... व्यः) ब्रह्मणि निष्ठा यस्य स ब्रह्मनिष्ठः। राजानौ। राजानः। राज्ञः॥

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८। २...**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र रा... इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न। राजभ्याम्। राजभिः। राजभ्य... राजनि, राज्ञि। राजसु॥ यज्वा। यज्वानौ। यज्वानः॥

**न संयोगाद्वमन्तात् ६। ४। १३७**

वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात्। यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः। ब्रह्मणा॥

**इन्हन्पूषार्यम्णां शौ ६। ४। १२**

---

देश इति। ङावुत्तरपदे प्रतिषेधो वक्तव्यः। उत्तरपदशब्दस्य समासस्य चरमावयवे रूढत्वात् समासचरमावयवे परतः ङौ परे नलोपनिषेधस्य प्रतिषेध इति तदर्थः। "नलोपः सुप्स्वर"। सुप् च स्वरश्च संज्ञा च तुक् च सुप्स्वरसंज्ञातुकस्तेषां विधयस्तेषु। विधिशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं सुबादिषु सम्बन्धोऽतः सुब्विध्याद्यर्थलाभः। तेषु सुब्विधावित्यस्य सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यताको विधिः सुब्विधिरित्यर्थः। अस्योदाहरणं—राजभ्यामित्यादि। अत्र सुप्त्वधर्मावच्छिन्नोद्देश्यके दीर्घविधौ कर्तव्ये नलोपस्यासिद्धत्वाद्दीर्घो न। स्वरविधावित्यस्योदाहरणम्—पञ्चार्ममिति। अत्र "अर्मेचावर्ण" इत्यादिसूत्रेण पूर्वपदाद्युदात्तस्वरे कर्तव्येऽनेन नलोपासिद्धत्वविधानादुक्तस्वरो न भवति। संज्ञाविधावित्यस्योदाहरणम्—पञ्चेति। अत्र षट्संज्ञाविधौ कर्तव्ये नलोपासिद्धत्वेन ङीप्टापोरप्राप्तिः। कृति तुग्विधावित्यस्योदाहरणम्—वृत्रहभ्यामित्यादि। अत्र प्रत्ययलक्षणेन क्विप्परत्वमादाय "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति, नलोपस्यासिद्धत्वान्न भवति। नान्यत्रेति। पूर्वत्रासिद्धमित्यनेनैवासिद्धत्वसिद्धौ सूत्रमिदं व्यर्थं सन्नियमार्थम्। तत्स्वरूपन्तु सूत्रोपात्तविधीनां कर्तव्यत्वे एव नलोपासिद्धि—र्नतु तदन्यविधीनां तत्त्वेऽपीति। तत्फलं दर्शयति—नान्यत्र राजाश्व इत्यादाविति। अत्र सवर्णदीर्घविधौ कर्तव्ये नलोपसिद्ध्यभावाद्दीर्घो भवत्येव। "न संयोगाद्वमन्तात्"। वश्च मश्च वमौ तावन्ते यस्य स वमन्तस्तस्मात्। "अल्लोपोऽनः" इति सम्पूर्णसूत्रमनुवर्ततेऽत आह—अनोऽकारस्य लोपो नेति। "इन्हन्पूषार्यम्णां शौ" इन् च हन् च

[..]वां [..]वोपधाया दीर्घो नाऽन्यत्र । इति निषेधे प्राप्ते ॥

## सौ च ६ । ४ । १३

[..]ामुपधाया दीर्घः स्यादसम्बुद्धौ सौ । वृत्रहा । हे वृत्रहन् ॥

## एकाजुत्तरपदे णः ८ । ४ । १२

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रतिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः स्यात् । वृत्रहणौ ॥

## हो हन्तेर्ञ्णिन्नेषु ७ । ३ । ५४

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । वृत्रघ्न इत्यादि । एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् ॥

## मघवा बहुलम् ६ । ४ । १२८

---

पूषा च अर्यमा च इन्हन्पूषार्यमणस्तेषाम् । "नोपधायाः" इत्यत उपधाया इति वर्तते । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति, "सर्वनामस्थाने चाऽसम्बुद्धौ" इति च शेः सर्वनामस्थानत्वादनेनैव दीर्घसिद्धाविदम् "इन्हन्नि"ति सूत्रं नियमार्थमित्याह—एषां शावेवेति । नियमफलं दर्शयति—नान्यत्रेति । "सौ च" । पूर्वसूत्रादुपधाया दीर्घोऽसम्बुद्धाविति च सम्बध्यते । पूर्वसूत्रेण शावेव दीर्घविधानात्सौ तदप्राप्ताविदं विध्यर्थमित्याशयेनाह—इन्नादीनामुपधाया दीर्घ इति । "एकाजुत्तरपदे णः" । एकोऽच् यस्मिन् तदेकाच् तादृशमुत्तरपदं यस्य समासस्य स एकाजुत्तरपदस्तस्मिन् । "पूर्वपदात्संज्ञायामगः" इत्यतः पूर्वपदादिति । "रषाभ्यां नो णः समानपदे" इत्यतो रेफषकारयोर्न इत्यस्य चानुवृत्तिः । "प्रातिपदिकान्तनुम्विभक्तिषु च" इति वर्तते तदाह—पूर्वपदस्थान्निमित्तादित्यादि । वृत्रघ्न इति । अत्र माधवाचार्येण णत्ववैकल्पिकत्वमभिहितं वृत्रघ्नः, वृत्रघ्णः इति तद्भाष्यवार्तिकाभ्यां विरोधाद्धेयम् । यशस्विन्निति । "इन्हन्"इति सूत्रे (अर्थवद्ग्रहणे नानर्थकस्य) इति परिभाषयार्थवत इनो ग्रहणेन यशस्विन्घटकस्येनोऽग्रहणाद्दीर्घो नेति चेन्न । (अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती) ति परिभाषयाऽनर्थकस्यापीनो ग्रहणाद्दीर्घसिद्धेः । "मघवा बहुलम्" । मघवेति षष्ठ्यर्थे प्रथमान्तम् । "अर्वणस्त्रसावनञः" इत्यतस्तृ इत्यस्यानुवृत्तिः । (नानुबन्धकृतमनेकाल्त्वम्) इति परिभाषया तृ इत्यस्यानेकाल्त्वाभावबोधनादलोऽन्त्यपरिभाषयाऽन्त्य-

मघवन् शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् ॥

## उगिदचां सर्वनामस्थानेऽधातोः ७ । १ ।

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे । दीर्घः मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राज

## श्वयुवमघोनामतद्धिते ६ । ४ । १३३

अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात् । मघोनः । मघवभ्याम् । एवं श्वन् ॥

## न सम्प्रसारणे सम्प्रसारणम् ६ । १ । ३७

सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणम् । यूनः । यूना । युवभ्याम् इत्यादि । अर्वा । हे अर्वन् ॥

## अर्वणस्त्रसावनञः ६ । ४ १२७

नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशः स्यात् न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥

## पथिमथ्यृभुक्षामात् ७ । १ । ८५

एषाम । कारोऽन्तादेशः स्यात् सौ परे ॥

## इतोऽत्सर्वनामस्थाने ७ । १ । ८६

पथ्यादेरिकारस्याकारः स्यात् सर्वनामस्थाने परे ॥

---

स्य स्थाने भवतीत्यत आह–**मघवन्शब्दस्य वा तृ इत्यन्तादेश** इति । "**उगिदचां सर्वनामस्थाने**" । "इदितो नुम्धातोः" इत्यतो नुमोऽनुवृत्तौ सूत्रेऽच्पदेन व्याख्यानान्नलोपिनोऽञ्चतेरेव ग्रहणे च सति लब्धमर्थमाह–**नलोपिनोऽञ्चतेश्च नुमिति** । **दीर्घ इति** । "सर्वनामस्थाने चाऽसम्बुद्धौ" इत्यनेनेति शेषः । **मघवानिति** । अत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवतीति बोध्यम् । "**श्वयुवमघोनामतद्धिते**" । श्वा च युवा च मघवा चैतेषामितरेतरद्वन्द्वः श्वयुवमघवानस्तेषाम् । "अल्लोपोऽनः" इत्यतोऽनोऽनुवृत्तिः । "भस्य" इत्यस्याधिकारः । "वसोः सम्प्रसारणम्" इत्यस्यानुवृत्तिः । श्वयुवेत्यादिविशेष्येषु विशेषणीभूतेनाऽन इत्यनेन तदन्तविधिस्तदाह–**अन्नन्तानामित्यादि** । "**पथिमथ्यृभुक्षामात्**" । "सावनडुहः" इत्यतः सावित्यनुवर्तते । सूत्रोक्तशब्दानां षष्ठ्यन्तत्वात् "अलोऽन्त्यस्य" इति परिभा-

## थो न्थः ७ । १ । ८७

पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे। पन्थाः । पन्थानौ । पन्थानः॥

## भस्य टेर्लोपः ७ । १ । ८८

भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथिभ्याम। एवं मथिन्। ऋभुक्षिन् ॥

## ष्णान्ता षट् १ । १ । २४

षान्ता नान्ता च संख्या षट् संज्ञा स्यात्। पञ्चन् शब्दो नित्यं बहुवचनान्तः। पञ्च। पञ्च। पञ्चभिः पञ्चभ्यः। पञ्चभ्यः। नुट् ॥

## नोपधायाः ६ । ४ । ७

नान्तस्योपधाया दीर्घः स्यात् नामि। पञ्चानाम्। पञ्चसु ॥

## अष्टन आ विभक्तौ ७ । २ । ८४

अष्टन आत्वं वा स्यात् हलादौ विभक्तौ ॥

## अष्टाभ्य औश् ७ । १ । २१

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् अष्टभ्य इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ। अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु। आत्वाभावे अष्ट। इत्यादि पञ्चवत् ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजि-
## क्रुञ्चां च ३ । २ । ५९

---

षयाऽन्त्यस्य स्थाने भवतीत्याह—पथ्यामाकारोऽन्तादेशः स्यात्साविति। पन्था इति। अत्राऽऽदित्यत्र आ आदिति प्रश्लेषेण शुद्धाया आव्यक्तेर्विधानादनुनासिकस्थानेऽपि निरनुनासिक एव। "ष्णान्ता षट्"। ष् च ण् च ष्णौ तावन्ते यस्याः सा ष्णान्ता। सङ्ख्यां विशेषयितुं स्त्रीलिङ्गनिर्देशः। तत्सामर्थ्यात् ("बहुगण") इतिसूत्रादनुवृत्तस्य संज्ञापरस्यापि संख्याशब्दस्यात्र संज्ञिपरत्वमित्यत आह—षान्ता नान्ता च संख्येति। "अष्टन आविभक्तौ"। "रायो हलि" इत्यतो हलीत्यपकर्षे 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधौ, "अष्टनो दीर्घात्" इत्यत्र दीर्घग्रहणसामर्थ्यादात्वस्य वैकल्पिकत्वे च लब्धमर्थमाह—अष्टन आत्वं वा स्याद्धलादाविति। अष्टभ्य इति वक्तव्ये। अस्यायम्भावः—हलादावष्टन

एभ्यः क्विन् स्यात् अञ्चेस्सुप्युपपदे युजिक्रुञ्चयोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ ॥

## कृदतिङ् ३ । १ । ९३

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥

## वेरपृक्तस्य ६ । १ । ६७

अपृक्तस्य वस्य लोपः स्यात् ॥

## क्विन्प्रत्ययस्य कुः ८ । २ । ६२

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । अस्यासिद्धत्वात् "चोः कुः" इति कुत्वम् । ऋत्विक्, ऋत्विग् । ऋत्विजौ ऋत्विग्भ्याम् ॥

## युजेरसमासे ७ । १ । ७१

युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् । युञ्जौ । युञ्जः ।

## चोः कुः ८ । २ । ३०

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक् । सुयुजौ । सुयुग्भ्याम् । खन् । खञ्जौ । खन्भ्याम् ॥

## व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८ । २ । ३६

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात् झलि पदान्ते च । जश्त्वचर्त्वे । राट्, राड् । राजौ । राजः । राड्भ्याम् ॥ एवं विभ्राट् देवेट्

---

आत्वविधानादजादौ तदप्राप्त्या जश्शसोः कृताकारात्परत्वासम्भवात् "अष्टभ्य औश्" इत्येव निर्देष्टव्ये कृतात्वनिर्देशो व्यर्थः सन् ज्ञापयति जश्शसोर्विषयेऽप्यात्वं भवतीति । "क्विन्प्रत्ययस्य कुः" । क्विनः कुरित्येव सूत्रमस्तु प्रत्ययग्रहणपरिभाषया तदन्तविधौ क्विन्नन्तस्य कुत्वमित्यर्थेनैव सिद्धौ सूत्रस्थं प्रत्ययग्रहणं वप्सागर्भबहुव्रीहिलाभार्थम् । क्विन्प्रत्ययो यस्मात्स क्विन्प्रत्ययस्तस्य । यस्माद्यस्मात्क्विन् दृष्टस्तस्य कवर्गोऽन्तादेश इत्यर्थः । तेन क्विन्यपि क्वचित् कुत्वं भवतीति बोध्यम् । तदेवाह वृत्तौ—क्विन्प्रत्ययो यस्मादिति । ऋत्विगिति । ऋतौ यजतीति ऋत्विक् । ऋतावुपपदे यजेः क्विन् । खनिति । खञ्जतीति खन् । 'खजि, गतिवैकल्ये' इत्यस्मात्क्विप् । विभ्राडिति । विशेषेण भ्राजते शोभते इति विभ्राट् । व्युपसर्गाद्भ्राजतेः क्विप् । देवेडिति । देवान् यजतीति देवेट् देवशब्दोपपदे यजेः

विश्वसृट् । ( परौ व्रजेः षः पदान्ते ) परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि । परिव्राट । परिव्राजौ ॥

## विश्वस्य वसुराटोः ६ । ३ । १२८

विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ।

## स्कोः संयोगाद्योरन्ते च ८ । २ । २९

पदान्ते झलि च परे यः संयोगस्तदाद्योः स्कोर्लोपः स्यात् । भृट् । सस्य श्चुत्वेन शः । "झलां जश् झशि" इति शस्य जः भृज्जौ । भृड्भ्याम् । त्यदाद्यत्वम् । पररूपत्वम्

## तदोः सः सावनन्त्ययोः ७ । २ । १०६

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । त्यौ । त्ये । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते ॥

## ङे प्रथमयोरम् ७ । १ । २८

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् ॥

## त्वाहौ सौ ७ । २ । ९४

अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः सौ परे ॥

## शेषे लोपः ७ । २। ९०

---

क्विप् । विश्वसृडिति । विश्वं सृजतीति विश्वसृट् । विश्वोपपदे सृजेः क्विप् । परिव्राडिति । परित्यज्य सर्वान् व्रजतीति परिव्राट् । परावुपपदे व्रजेः क्विप् । विश्वाराडिति । सूत्रे राट् इत्यत्र चर्त्वमविवक्षितम् । अन्यथा राट्पर एव दीर्घः स्यादेवञ्च विश्वाराड् विश्वाराड्भ्यामित्यादौ राट्शब्दपरत्वाभावाद्दीर्घो न स्यादिति भावः । भृडिति । भृज्जतीति भृट् भृज्जतेः क्विप् । ( येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ) इति न्यायेन संयोगान्तलोपं च बाधित्वा संयोगादिलोपो भवतीति बोध्यम् । "ङे प्रथमयोरम्" । ङे इति लुप्तषष्ठ्यन्तम् प्रथमा च प्रथमा च प्रथमे तयोः । एकः प्रथमाशब्दः प्रथमाबोधकोऽपरश्च प्रथमाशब्दो द्वितीयाबोधकः । "युष्मदस्मद्भ्यां ङसोऽश्"इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते तदाह—युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चेति । "त्वाहौ सौ"। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते, "मपर्यन्तस्य" इति चाधिक्रियते तदाह—अनयोर्मपर्यन्तस्येति । "शेषे लोपः" । युष्मदस्मदोरना-

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । त्वम् । अहम् ॥

## युवावौ द्विवचने ७ । २ । ९२

द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥

## प्रथमायाश्च द्विवचने भाषायाम् ७ । २ । ८८

इह युष्मदस्मदोराकारोऽन्तादेशः स्यात् । 'औङ्येतयोरात्वं लोके' । युवाम् । आवाम् ॥

## यूयवयौ जसि ७ । २ । ९३

अनयोर्मपर्यन्तस्य यूयवयौ स्तो जसि । यूयम् । वयम् ॥

## त्वमावेकवचने ७ । २ । ९७

एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥

## द्वितीयायां च ७ । २ । ८७

अनयोरात्स्यात् । त्वाम् । माम् ॥

## शसो न ७ । १ । २९

आभ्यां परस्य शसो नः स्यादमोऽपवादः । "आदेः परस्य" । संयोगान्तलोपः । युष्मान् । अस्मान् ॥

## योऽचि ७ । २ । ८९

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥

## युष्मदस्मदोरनादेशे ७ । २ । ८६

अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥

## तुभ्यमह्यौ ङयि ७ । २ । ९५

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । टिलोपः । तुभ्यम् । मह्यम् ॥

## भ्यसोऽभ्यम् ७ । १ । ३०

---

देशे" इत्यतो युष्मदस्मदोरनुवृत्तिः, पञ्चम्या विपरिणतस्य मपर्यन्तस्येत्यस्य चानुवृत्तिः शेष इति सप्तम्यन्तं षष्ठ्यन्ततया विपरिणम्यते तदायमर्थो लभ्यते—एतयोष्टिलोप इति । युष्मदस्मदोर्मपर्यन्ताच्छेषस्य लोप इति फलितोऽर्थः । एकस्योक्ताविति । एकत्वसंख्यारूपार्थवाचकयोर्युष्मदस्मदोरित्यर्थः । "भ्यसोऽभ्यम्"

भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् । युष्मभ्यम् । अस्मभ्यम् ॥

**एकवचनस्य च ७ । १ । ३२**

आभ्यां ङसेरत् स्यात् । त्वत् । मत् ॥

**पञ्चम्या अत् ७ । १ । ३१**

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् अस्मत् ॥

**तवममौ ङसि ७ । २ । ९६**

अनयोर्मपयन्तस्य तवममौ स्तो ङसि ॥

**युष्मदस्मद्भ्यां ङसोऽश् ७ । १ । २७**

तव । मम । युवयोः । आवयोः ॥

**साम आकम् ७ । १ । ३३**

आभ्यां परस्य साम आकं स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो-र्वान्नावौ ८ । १ । २०**

पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोर्वान्नावौ इत्यादेशौ स्तः ॥

**बहुवचनस्य वस्नसौ ८ । १ । २१**

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥

**तेमयावेकवचनस्य ८ । १ । २२**

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥

**त्वामौ द्वितीयायाः ८ । १ । २३**

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥

श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥

---

"शेषे लोपः" इत्यत्र पक्षद्वयम् । एकः टिलोपपक्षोऽपरोऽन्त्यलोपपक्षः । तत्र भ्यमादेशोऽन्त्यलोपपक्षे साधुः अभ्यमादेशस्तु टिलोपान्त्यलोपेतिपक्षद्वयेऽपि साधुः । अनेन सूत्रेण भ्यमादेशोऽभ्यमादेशश्च विधीयते इति बोध्यम् । "साम आकम्" । भाविसुटो व्यावृत्तयेऽत्र सुण्निर्देशो बोध्यः । एष एव च निर्देशोऽन्त्यलोपपक्षसाध-

सुखं वां नौ ददात्वीशः पातर्वामपि नो हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥

(एकवाक्ये युष्मदस्मदादेशा वक्तव्याः) एकतिङ्वाक्यम्, तेनेह न—आदनं प[...] तव भविष्यति । इह तु स्यादेव—शालीनां ते ओदनं दास्यामि । (एते वान्नावाद[...] आदेशा अनन्वादेशे वा वक्तव्याः) अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति । धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव । सुपात् । सुपाद् । सुपादौ ।

## पादः पत् ६ । ४ । १३०

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्मात् । सुपदः । सुपदा । सुपाद्भ्याम् । अग्निमत्, अग्निमद् । अग्निमथौ । अग्निमथः ।

## अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति । नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः ।

## अचः । ६ । ४ । १३८

---

कोऽपीति बोध्यम् । वस्तुतस्तु "गोतो णित्" इत्यत्र गकार इव साम इत्यत्र सकारो विवक्षित इति । **एकतिङ् वाक्यमिति** । तिङ्पदेन तिङन्तग्रहणम् । एकं तिङन्तं यस्य तदेकतिङ् । तथाच—एकतिङन्तघटितं वाक्यमिति तदर्थः । तेन भवतीत्यादेः केवलस्य वाक्यत्वं न लक्षणमिदं स्वशास्त्रकार्योपयोगि नातः पश्य मृगो धावतीत्यादेर्वाक्यत्वानुपपत्तिः । वस्तुतः एकतिङन्तार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वं तत्त्वम् । तेनोक्तस्थलेऽपि वाक्यत्वसिद्धिः । **सुपादिति** । सुष्ठु शोभनौ पादौ यस्य स सुपात् । "पादस्य लोपोऽहस्त्यादिभ्यः" इति सूत्रेण समासान्तलोपविधानात्सुपादिति हलन्तशब्दो निष्पन्नः । **"पादः पत्"** । अङ्गस्य, "भस्य" इत्यनयोरधिकारस्तत्र विशेषणीभूतपादशब्दात् "येन विधिः" इति तदन्तविधिरत आह—**पाच्छब्दान्तं यदङ्गं भमिति** । निर्दिश्यमानपरिभाषया पादशब्दस्यैवादेशविधानादाह—**तदवयवस्य पाच्छब्दस्येति** । **अग्निमदिति** । अग्निं मथ्नाति मन्थतीति वा अग्निमत् । अग्निशब्दोपपदे मन्थतेर्मथ्नातेर्वा क्विपि रूपम् । इदितो मन्थतेर्नलोपाभावादग्निमन् अग्निमन्थामित्येव रूपम् । **"अनिदितां हल उपधायाः क्ङिति"** । "अङ्गस्य" इत्यधिकारः, "श्नान्नलोपः" इति सूत्रान्नलोप इत्यस्यानुवृत्तिः, विशेषणेन हल इत्यनेन तदन्तविधिस्तदाह—**हलन्तानामिति** । **प्राङिति** । प्राऽ-ञ्चतीति प्राङ् गोपसर्गादञ्चतेः क्विन् । **"अचः"** । अत्र भस्याल्लोपयोः सम्बन्धा-

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ।

## चौ ६ । ३ । १३८

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् । उदङ् । उदञ्चौ ॥

## उद ईत् ६ । ४ । १३९

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् स्यात् । उदीचः । उदीचा । उदग्भ्याम् ॥

## समः समि ६ । ३ । ९३

वप्रत्ययान्तेऽञ्चतौ । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ।

## सहस्य सध्रिः ६ । ३ । ९५

वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेशः । सध्र्यङ् ।

## तिरसस्तिर्यलोपे ६ । ३ । ९४

अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिर्यग्भ्याम् ।

## नाञ्चेः पूजायाम् ६ । ४ । ३०

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । प्राङ् । प्राञ्चौ । नलोपाभावदलोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ् । क्रुञ्चौ । क्रुङ्भ्याम् । पयोमुक्, पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् । उगित्वान्नुम् ।

## सान्तमहतः संयोगस्य ६ । ४ । १०

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने

---

दच्पदेन च व्याख्यानाल्लुप्तनकाराञ्चतेरेव ग्रहणाच्चाह—लुप्तनकारस्याञ्चतेरित्यादि । "चौ" । अत्रापि चिशब्देन व्याख्यानाल्लुप्तनकाराञ्चतेर्ग्रहणम् । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्रस्य ढ्रलोप इति रहितस्यानुवृत्तिरत आह—लुप्ताकारनकारेऽञ्चतावित्यादि । प्रत्यङ्ङिति । प्रत्यञ्चतीति प्रत्यङ् प्रतिपूर्वादञ्चतेः क्विन् । उदङ्ङिति । उत् ऊर्ध्वमञ्चतीति उदङ् उत्पूर्वादञ्चतेः क्विन् । सम्यङ्ङिति । सममञ्चतीति सम्यङ् सम्पूर्वादञ्चतेः क्विन् । सध्र्यङ्ङिति । सहाऽञ्चतीति सध्र्यङ् सहोपपदादञ्चतेः क्विन् । तिर्यङ्ङिति । तिरोऽञ्चतीति तिर्यङ् तिरश्शब्दोपपदादञ्चतेः क्विन् । क्रुङिति । क्रुञ्चतीति क्रुङ् क्रुञ्चतेः क्विन् । पयोमुगि·

महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥

**अत्वसन्तस्य चाधातोः ६ । ४ । १४**

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य भवन् ॥

**उभे अभ्यस्तम् ६ । १ । ५**

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

**नाभ्यस्ताच्छतुः ७ । १ । ७८**

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत् ददद् । ददतौ । ददतः ॥

**जक्षित्यादयः षट् ६ । १ । ६ ॥**

षट् धातवोऽन्ये, जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्, जक्षद्। जक्षतौ। जक्षतः । एवं जाग्रत्, दरिद्रत्, शासत्, चकासत् । गुप् । गुपौ । गुपः । गुब्भ्याम् ॥

**त्यदादिषु दृशोऽनालोचने कञ्च ३ । २ । ६०**

त्यदादिषूपपदेषु अज्ञानार्थाद् दृशेः कञ् स्यात् चात् क्विन् ॥

**आ सर्वनाम्नः । ६ । ३ । ९१**

सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतुपु । तादृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विड्भ्याम् ॥

**नशेर्वा ८ । २ । ६३**

---

ति । पयोमुच्यतीति पयोमुक् पयश्शब्दोपपदान्मुचेः क्विप् । **महानिति** । महतीति महान् 'मह, पूजायाम्' इत्यस्माच्छतृप्रत्ययः । संयोगान्तलोपाऽसिद्धत्वान्नलोपो नेति बोध्यम् । **धीमानिति** । धीरस्यास्तीति धीमान् । धीशब्दान्मतुप् । **ददिति** । ददातीति ददत् दाधातोः शतृप्रत्ययः । दा इत्यस्य ददादेशः । "**जक्षित्यादयः षट्** । जक्षितिरादिरवयवो येषां ते जक्षित्यादयः । अत्र तद्गुणसंविज्ञानो बहुव्रीहिस्तेन जक्षितेरपि ग्रहणमित्यत आह—**षट् धातवोऽन्ये जक्षितिश्च सप्तम इति** । **जक्षदिति** । 'जक्ष' भक्ष' हसनयोः, अस्माच्छतृप्रत्ययः । **एवं जाग्रदित्यादि** । जागृ निद्राक्षये । दरिद्रा दुर्गतौ । शासु अनुशिष्टौ । चकासृ दीप्तौ । एभ्यः शतृप्रत्ययः । **गुबिति** । गुपू रक्षणे । अस्मात्क्विप्

नशेः कवर्गोऽन्तादेशो वा स्यात् पदान्ते। नक्, नग्। नट, नड्। नशौ। नशः। नग्भ्याम्, नड्भ्याम्॥

## स्पृशोऽनुदके क्विन् ३।२।५८

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्। घृतस्पृक्, घृतस्पृग्। घृतस्पृशौ। घृतस्पृशः। दधृक्। दधृग्। दधृषौ। दधृग्भ्याम्। रत्नमुट्, रत्नमुड्। रत्नमुषौ। रत्नमुड्भ्याम्। षट्, षड्। षड्भिः। षड्भ्यः। षण्णाम्। षट्सु। रुत्वं प्रति षत्वस्याऽसिद्धत्वात् "ससजुषो रुः" इति रुत्वम्॥

## र्वोरुपधाया दीर्घ इकः ८।२।७६

रेफवान्तयोरुपधाया इको दीर्घः स्यात् पदान्ते। पिपठीः। पिपठिषौ। पिपठीर्भ्याम्॥

## नुम्विसर्जनीयशर्व्यवायेऽपि ८।३।५८

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात्। ष्टुत्वेन पूर्वस्य षः। पिपठीष्षु। पिपठीःषु। चिकीः। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु॥ विद्वान्। विद्वांसौ। हे विद्वन्॥

## वसोः सम्प्रसारणम् ६।४।१३१

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः "वसुस्रंसु"इति दः। विद्वद्भ्याम्।

## पुंसोऽसुङ् ७।१।८९॥

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। पुमान्। हे पुमन्। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु॥ "ऋदुशन"इत्यनङ्। उशना। उशनसौ। (अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः) हे उशन, हे उशनन्, हे उशनः। हे उशनसौ। उशनोभ्याम्। उशनस्सु॥ अनेहाः। अनेहसौ। हे अनेहः। वेधाः। वेधसौ। हे वेधः। वेधोभ्याम्॥

---

विडिति। विश प्रवेशने। अस्मात्क्विप्। नगिति। णश, अदर्शने'। अस्मात्क्विप्। घृतस्पृगिति। घृतं घृतेन वा स्पृशतीति घृतस्पृक्। घृतोपपदात् 'स्पृश, स्पर्शने' अस्मात्क्विन्। उदकोपपदात्तु कर्मण्यण् उदकस्पर्शः। दधृगिति। धृष्णोतीति दधृक्। 'ञिधृषा, प्रागल्भ्ये'। अस्मात् "ऋत्विग्" इत्यादिसूत्रेण क्विन् द्विरवमन्तोदात्तत्वं च निपात्यते। रत्नमुडिति। रत्नानि मुष्णातीति रत्नमुट् रत्नशब्दोपपदात् 'मुष, स्तेये' अस्मात्क्विप्। पिपठीरिति। पठितुमिच्छति पिपठिषति तस्मात्क्विप्। चिकीरिति। कर्तुमिच्छति चिकीर्षति चिकीर्षतेः क्विप्। विद्वानिति। वेत्तीति विद्वान्। 'विद, सत्तायामित्यस्माद्वसुप्रत्ययः। पुमानिति। पुनातीति पुमान्।

## अदस औ सुलोपश्च ७ । २ । १०७

अदस औ स्यात्सौ परे सुलोपश्च । "तदोः" इतिसः । असौ । त्यदाद्यत्वम् । पररूपत्वम् । वृद्धिः ॥

## अदसोऽसेर्दादु दो मः ८ । २ । ८०

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्यात् ह्रस्वस्य उः दीर्घस्य ऊः । अमू । "जसः शी" । गुणः ॥

## एत ईद् बहुवचने ८ । २ । ८१

अदसो दात्परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥

## न मु ने ८ । २ । ३

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमीषु ॥

इति हलन्ताः पुंल्लिङ्गाः ।

---

# अथ हलन्तस्त्रीलिङ्गप्रकरणम् ॥

## नहो धः ८ । २ । ३४

नहो हस्य धः स्यात् झलि पदान्ते च ॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६ । ३ । ११६

क्विबन्ते पूर्वपदस्य दीर्घः स्यात । उपानत्, उपानद् । उपानहा । उपान-

---

'पूञ्, पवने' अस्मात् औणादिकड्डमूसुन्प्रत्ययः । "नमुने" । न इति विषयसप्तमी त्याह—नाभावे कर्तव्य इति । विषयसप्तम्यस्वीकारे तु मुभावस्यासिद्धत्वेन घेः परत्वाभावान्नाभावो न स्यात् । ननु कृते नाभावे "सुपि च" इति दीर्घम्प्रति मुत्वमासिद्धमितिदीर्घः स्यादित्याह—कृते चेति । "नहो धः" । "झलो झलि" इत्यतो झलीति सम्बध्यते "पदस्य" इत्याधिकृतं "स्कोः संयोगाद्योः" इत्यतोऽनुवृत्तेऽन्तेऽन्वेति तदाह-झलि पदान्ते चेति । "हो ढः" इत्यस्यापवादः । "नहिवृतिवृषिव्यधि" "ढूलोपे" सूत्रात् पूर्वस्य दीर्घोऽणः इति पदत्रयानुवृत्तिः । क्विपः प्रत्ययत्वेन ततः प्रत्ययग्रहणपरिभाषया तदन्तग्रहणमित्यत आह—क्विबन्तेष्विति । उपान

न क्विन्नन्तत्वात् कुत्वेन घः। उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् । द्यौः। दिवौ । दिवः । द्युभ्याम् । गीः । गिरौ । गिरः । एवं पूः । चतस्रः । चतसृणाम् । का के । काः । सर्वावत् ।

### यः सौ ७ । २ । ११०

इदमो दस्य यः स्यात्सौ । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । आभ्याम् । आभिः। अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु । त्यदाद्यत्वम् । टाप् । स्या। त्ये । त्याः । एवं तद्, एतद् ॥ वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः । "अप्तृन्" इति दीर्घः । आपः । अपः ॥

### अपो भि ७ । ४ । ४८

अपस्तकारः स्यात् भादौ प्रत्यये । अद्भिः । अद्भ्यः । अपाम् । अप्सु । दिक्। दिग । दिशः । दिग्भ्याम् । "त्यदादिषु" इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक् । दृशौ । दृग्भ्याम् । त्विट् , त्विड् । त्विषौ । त्विड्भ्याम् । "ससजुषो रुः" इति रुत्वम् । सजूः । सजूर्भ्याम् । आशीः । आशिषौ । आशीर्भ्याम् । असौ । उत्वमत्वे— अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्यः । अमुष्याः। अमूषाम् । अमुष्याम् । अमूषु ॥

इति हलन्ताः स्त्रीलिङ्गाः ।

---

ग्निति । उपपूर्वात्स्निह्यतेः क्विप् । उष्णिगिति । उत्पूर्वात् स्निह उद्गिरणेऽस्मात्क्वन् । द्यौरिति । दिविति प्रातिपदिकमव्युत्पन्नम् । दिवेर्डिविरिति न्यासोहितसूत्रेण निष्पन्न- म्वा । गीरिति । 'गॄ निगरणे' इत्यस्मात् 'गॄ, शब्दे' इत्यस्माद्वा क्विप् । पूरिति । 'पॄ पालनपूरणयोः' अस्मात्क्विप् । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । "यः सौ" "इदमो मः" इत्यत इदम इति "दश्च" इत्यतो द इति चानुवर्त्ततेऽत आह—इदमो दस्येति । वागिति । वक्तीति वाक् । 'वच, परिभाषणे' अस्मात्क्विप् । क्विब्वचि- प्रच्छी"त्यादिना दीर्घोऽसम्प्रसारणञ्च । "अपो भि" । "अच उपसर्गात्त" इत्यतस्त इति वर्त्तते विशेष्ये प्रत्यये विशेषणीभूताद्भीतिसप्तम्यन्तात्तदादिविधिरित्याह—अपस्त- कारः स्याद्भादाविति । दिगिति । 'दिश् , अतिसर्जने' अस्मात्क्विप् दृगिति । 'दृशिर्, प्रेक्षणे' अस्मात्क्विप् । त्यदादिष्वि"ति सूत्रेण दृशेः क्विन्विधानात्क्विप्यपि कु- त्वम् । त्विडिति । त्विष दीप्तौ अस्मात्क्विप् । सजूरिति । समानं जुषते इति स- जूः । 'जुषी, प्रीतिसेवनयोः' अस्मात्समानोपपदात्क्विप् । समानस्य सभावः । आशी- रिति । आङ्पूर्वाच्छासेः क्विप् । ( आशासः क्वावुपसंख्यानम् ) इत्युपधाया इत्वम् ।

# अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

"स्वमोर्लुक्" । दत्वम् । स्वनडुद् । स्वनडुही । "चतुरनडुहोः" इत्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वार्भ्याम् । चत्वारि । किम् । के । कानि । इदम् । इमे । इमानि । (अन्वादेशे नपुंसके एनद्वक्तव्यः) एनत्, एनद् । एने । एतानि । एनेन । एनयोः । अहः । "विभाषा ङिश्योः" । अह्नी, अहनी । अहानि ।

## अहन् ८ । २ । ६८

अहन्नित्यस्य रुः स्यात् पदान्ते । अहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । (सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः) हे दण्डिन्, हे दण्डि । दण्डिना । दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी । सुपन्थानि । ऊर्क् । ऊर्ञ्जि । नरजानां संयोगः । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते । एतानि । गवाक् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति । ददत् ॥

## वा नपुंसकस्य ७ । १ । ७९

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् स्यात् सर्वनामस्थाने । ददन्ति, ददति । तुदत् ॥

## आच्छीनद्योर्नुम् ७ । १ । ८०

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा स्यात् शीनद्योः । तुदन्ती, तुदती । तुदन्ति ॥

## शप्श्यनोर्नित्यम् ७ । १ । ८१

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ धनुः । धनुषी । "सान्त" इति दीर्घः । "नुम्

---

स्वनडुद्दिति । सुष्ठु अनड्वान् यस्मिन् कुले तत् स्वनडुत् कुलम् । वारिति । वार्शब्दो जलवाचकः । 'आपः स्त्री भूम्नि वार्वारि' इति कोशात् । "अहन्" । "ससजुषो रुः" इत्यतो रुः । पदस्याऽन्ते चेतिवर्तते तदाह-रुः स्यात् पदान्त इति । दण्डीति । दण्डोऽस्यास्तीति दण्डी दण्डशब्दादिन्प्रत्ययः । गवागिति । गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥ स्वमुट्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥ "शप्श्यनोर्नित्यम्" । आरम्भसामर्थ्यादिह नित्यत्वलाभे सूत्रे नित्यग्रहणं वेत्यधिकारनिवृत्त्यर्थम् । अन्यथाऽऽरम्भसामर्थ्यादिह नित्यमुतत्र विकल्पापत्तिः स्यात् । सा-

"णीय" इति षः । धनूंषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पयः । पयसी । पयांसि । पयसा । पयोभ्याम् । सुपुम् । सुपुंसी । सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमु । अमूनि । शेषं पुंवत् ।

इति हलन्ता नपुंसकलिङ्गाः ॥

## अथाव्ययप्रकरणम् ॥

### स्वरादिनिपातमव्ययम् १ । १ । ३७

स्वरादयो निपाताश्चाव्ययसंज्ञा स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । अधस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ( ब्राह्मणवत् । क्षत्रियवत् । ) सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहिकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । प्रतान् । मा । माङ् । 'आकृतिगणोऽयम्' ॥ च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । किञ्चित् । नेह । हन्त । माकिः । माकिम् । नकिः । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । न्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' । अवदत्तम् ।

---

न्तेति दीर्घ इति । रेफान्तस्याऽधातुत्वेन "र्वोरुपधाया दीर्घ इकः" इत्यनेन दीर्घाप्राप्त्या "सान्तमहतः संयोगस्य" इत्यनेनैव दीर्घ इति भावः । सुपुम् । सुष्ठु पुमान् यस्मिन् कुले तत् सुपुम् कुलम् । "स्वरादिनिपातमव्ययम्" । स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः स्वरादिनिपातम् । स्वरादिशब्दानां चादिष्वेव पाठात् "तद्धितश्च" इति सूत्रचतुष्टयस्यापि "चादयोऽसत्त्वे" इत्यतोऽग्रे पाठान्निपातशब्देनैवास्तु व्यवहारः, सूत्रमिदं च मास्त्विति नाशङ्क्यम् । स्वस्ति वाचयति स्वः पश्यतीत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात्तेषां निपातसंज्ञाऽनापत्तेः । अतः सूत्रमावश्यकम् ।

अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु शु... । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः ॥ चादिरप्याकृतिगणः । तसिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । एतदन्तमप्यव्ययम् । अतः इत्यादि ॥

## कृन्मेजन्तः १ । १ । ३९

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै ॥

## क्त्वातोसुन्कसुनः १ । १ । ४०

एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥

## अव्ययीभावश्च १ । १ । ४१

अधिहरि ॥

## अव्ययादाप्सुपः २ । ४ । ८२

अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् । वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा । वगाहः, अवगाहः । पिधानम् , अपिधानम् ॥

इत्यव्ययानि ।

# अथ तिङन्ते भ्वादिप्रकरणम् ।

## तत्र परस्मैपदिनः ।

लट् । लिट् । लुट् लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् ॥ एषु पञ्च-

---

तसिलादय इति । परिगणनमिदम् । तच्च पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तिवारणार्थमावश्यकम् । "पञ्चम्यास्तसिल्" इति विहितो यस्तसिल् तदादयः "याप्ये पाशप्" इति विहित पाशप्प्रत्ययपर्यन्ता इति तदर्थः । "कृन्मेजन्तः" । श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानितिन्यायान्मेजन्त इति कृत एव विशेषणं न तु कृदन्तस्य । अत एव प्रतामौ प्रतामः, लवमाचष्टे णौ क्विपि लौरित्यत्र च नाव्ययत्वमिति । "अव्ययादाप्" । "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इति सूत्राल्लुगनुवर्तते । विहितविशेषणञ्चाश्रीयते तदाह—अव्ययाद्विहितस्यापः सुपश्च लुगिति । विहितविशेषणाश्रयणफलञ्च अत्युच्चैसावित्यादौ विभक्त्यलुग्रूपम् । अथ ति-

लृकारश्छन्दोमात्रगोचरः ॥

**लः कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६९**

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥

**वर्तमाने लट् ३ । २ । १२**

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्याल्लस्य नेत्वम् । भू, सत्तायाम् । कर्तृविवक्षायां भू ल् इति स्थिते ॥

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८**

एतेऽष्टादश लादेशाः स्युः ॥

**लः परस्मैपदम् १ । ४ । ९९**

लादेशाः परस्मैपदसंज्ञाः स्युः ॥

**तङानावात्मनेपदम् १ । ४ । १००**

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥

**अनुदात्तङित आत्मनेपदम् १ । ३ । १२**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ।

---

ऽन्तम् । "लः कर्मणि च" इति । अत्र चेन "कर्तरि कृत्" इति सूत्रात्कर्तरीत्यस्यापकर्षस्तदाह–वृत्तौ कर्तरीति । "वर्तमाने लट्" । वर्तमानत्वं च प्रारब्धापरिसमाप्तिक्रियाश्रयत्वं, क्रियाश्रयत्वाच्चात्र कालगतं विवक्षितम् । 'क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका' । इति हरिकारिकाप्रामाण्येन कालस्य क्रियाविशेषणत्वं नियतं तदाह–वर्तमानक्रियावृत्तेरिति । 'भू, सत्तायाम्' । इदं धातुसूत्रम् सत्तायामर्थे भूशब्दः साधुरिति तदर्थः । सत्ता च आत्मधारणानुकूलव्यापारः । "तङानावात्मनेपदम्" । तङ् च आनश्च तङानौ । अत्र तङिति प्रत्याहारः । स च, मस्प्रत्ययोत्तरवर्तितकारेण महिङो ङकारेण च ग्राह्यः । शानच् कानचौ च प्रत्ययौ । तौ च "लटः शतृशानचावप्रथमासमानाधिकरणे", "लिटः कानज्वा" इति सूत्राभ्यां विहितौ । "अनुदात्तङितः" । अनुदात्तश्च ङ् च अनुदात्तङौ तावितौ यस्य सोऽनुदात्तङित् तस्मात् । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धः । तत्रानुदात्तांशे तदन्तविधेः फलाभावादन्यांश एव तदन्तग्रहणमित्यभिप्रेत्याह–अनुदात्तेत इति ।

**स्वरितञितः कर्त्रभिप्राये क्रियाफले १ । ३ । ७२**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥

**शेषात्कर्तरि परस्मैपदम् १ । ३ । ७८**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १ । ४ । १०१**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥

**तान्येकवचनद्विवचनबहुवचनान्येकशः १ । ४ । १०२**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १ । ४ । १०५**

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमाने अप्रयुज्यमाने च मध्यमः स्यात् ॥

**अस्मद्युत्तमः १ । ४ । १०७**

तथाभूतेऽस्मद्युत्तमः ॥

**शेषे प्रथमः १ । ४ । १०८**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥

**तिङ्शित्सार्वधातुकम् ३ । ४ । ११३**

---

"उपदेशेऽज्" इत्यतोऽनुवृत्तस्याऽप्युपदेशपदस्य ञिदंश एव विशेषणत्वमन्यत्र अव्यभिचारात् सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेः । "स्वरितञितः कर्त्रभिप्राये" । स्वरितश्च ञ्च स्वरितञौ तावितौ यस्य स स्वरितञित् तस्मात् । कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायः तस्मिन् । "शेषात्कर्त्तरि" । उक्तादन्यः शेषस्तस्मात् । उक्तञ्चात्मनेदनिमित्तं तदाह—आत्मनेपदनिमित्तहीनादिति । "अस्मद्युत्तमः" । अत्राऽस्मदित्यतः प्राक् तिङ्वाच्यकारकवाचिनीति संयोज्यम् । प्रयुज्यमानेऽप्रयुज्यमाने चेत्युत्तरमिदमेव प्रतिपादयति—तथाभूत इति शब्देन । "शेषे प्रथमः" । उक्तादन्यस्य शेषपदार्थत्वान्मध्यमोत्तमयोर्विषयस्योक्तत्वात्प्रथमस्य विषयस्याऽनुक्तत्वात्स एव शेषपदार्थस्तत्र प्रथमपुरुषविधानं तदाह—मध्यमोत्तमयोरविषये प्रथम इति । "तिङ्शित्सार्वधातुकम्" । तिङ् च



तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

## कर्तरि शप् ३ । १ । ६८

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥

## सार्वधातुकार्धधातुकयोः ७ । ३ । ८४

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ॥

## झोऽन्तः ७ । १ । ३

प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । "अतो गुणे" । भवन्ति । भवसि । भवथः । भवथ ।

## अतो दीर्घो यञि ७ । ३ । १०१

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

## परोक्षे लिट् ३ । २ । ११५

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२

लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते ॥

## भुवो वुग् लुङ्लिटोः ६ । ४ । ८८

भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥

## लिटि धातोरनभ्यासस्य ६ । १ । ८

---

शिच्चेत्यनयोः समाहारद्वन्द्वः । धातोरित्यधिक्रियते तदाह—तिङः शितश्च धात्वधिकारोक्ता इति । अत्र धात्वधिकारोक्ता इत्यस्यानुक्तौ शपः सार्वधातुकत्वेन ङित्वात् हरीनित्यादौ ("घेर्ङिति") इति गुणापत्तिः । लिहः श्रिप इत्यादौ यगापत्तिश्च । सार्वधातुकेति । सार्वधातुकं च आर्धधातुकं च सार्वधातुकार्धधातुके तयोः । अत्र गुणशब्देन गुणस्य विधीयमानत्वादिक्परिभाषया षष्ठ्यन्तस्येक्पदस्योपस्थितिः । अङ्गस्येत्यधिक्रियते विशेषणत्वे तदन्तविधिः । तदाह—अनयोः परयोरिगन्ताङ्गस्येति । "परोक्षे लिट्" । अक्ष्णः परः परोक्ष तस्मिन् । "अक्ष्णोऽदर्शनात्" इति सूत्रेण समासान्तेऽच्प्रत्यये टिलोपे प्रकृतसूत्रनिर्देशान्निपातनादोकारे च परोक्षशब्दो नि-

लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य द्वितीयस्य। भूव भूव् अ इति स्थिते॥

## पूर्वोऽभ्यासः ६ । १ । ४

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्।

## हलादिः शेषः ७ । ४ । ६०

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। इति वलोपः।

## ह्रस्वः ७ । ४ । ५९

अभ्यासस्याचो ह्रस्वः स्यात्॥

## भवतेरः ७ । ४ । ७३

भवतेरभ्यासस्योकारस्य अः स्याल्लिटि॥

## अभ्यासे चर्च ८ । ४ । ५४

अभ्यासे झलां चरः स्युर्जशश्च। "झशां जशः खयां चरः" इति विवेकः। बभूव। बभूवतुः। बभूवुः॥

## लिट् च ३ । ४ । ११५

लिडादेशस्तिङार्धधातुकसंज्ञः स्यात्॥

## आर्द्धधातुकस्येड् वलादेः ७ । २ । ३५

वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

---

ष्पन्नः। परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। अत एव 'सुप्तो हं किल विललाप,' बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' इत्यादयः प्रयोगाः सङ्गच्छन्ते। "हलादिः शेषः"। अभ्यासस्याऽऽदिर्हल् शिष्यते इत्युक्त्याऽऽदिहल्वत एवाभ्यासस्य ग्रहणादजादेरभ्यासस्याग्रहणात् आत आटेत्यादावादिभूताऽकारादेः परस्य हलः शेषानापत्तिरिति चेन्मैवम्। लक्ष्यानुसारिव्याख्यानादभ्यासमात्रस्य ग्रहणेनोभयमात्रस्याभ्यासस्यहलादेरजादेश्च ग्रहणेनोक्तदोषायोगात्। "आर्धधातुकस्येड् वलादेः"। "नेड्वशि कृति" इत्यत इडित्यनुवर्तमानात्सिद्धावत्रेड्ग्रहणं नेति निवृत्त्यर्थम्। अन्यथा 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषया नकारस्याप्यनुवर्तनादिण्निषेधस्यैवा-

## अनद्यतने लुट् ३ । ३ । १५

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥

## स्यतासी लृलुटोः ३ । १ । ३३

धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शवाद्यपवादः । लृ इति लृङ् लृटोर्ग्रहणम् ॥

## आर्धधातुकं शेषः ३ । ४ । ११४

तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥

## लुटः प्रथमस्य डारौरसः २ । ४ । ८५

डारौरस् एते क्रमात्स्युः । डित्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥

## तासस्त्योर्लोपः ७ । ४ । ५०

तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ॥

## रि च ७ । ४ । ५१

रादौ प्रत्यये तथा । भवितारौ भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥

## लृट् शेषे च ३ । ३ । १३

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ॥

## लोट् च ३ । ३ । १६२

---

पत्तिरिति भावः "अनद्यतने लुट्" । गतयामिनीपश्चार्द्धेनागामियामिनीपूर्वार्द्धेन च सहितदिवसोऽद्यतनस्तद्भिन्नोऽनद्यतनस्तस्मिन् । स चायं द्विविधः—भूतानद्यतनो भविष्यदनद्यतनश्च । तत्र भूतानद्यतने लिडादिविधानाद्भविष्यत्यनद्यतने लुडादिविधानमित्यभिप्रेत्याह—भविष्यत्यनद्यतन इति । "तासस्त्योः" । "सस्यार्धधातुके" इत्यतः सीत्यस्यानुवृत्तिः । अनाक्षिप्तप्रत्ययस्य सीति विशेषणम् । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिस्तदाह—सादाविति । "रि च" । अत्र पूर्वसूत्रात्तासेरिति सम्बध्यते लोप इति च तथाच रादौ प्रत्यये तासेर्लोप इत्यर्थस्तदेवाह—रादौ प्रत्यये तथेति । अत्र नाऽस्तेः सम्बन्धस्तस्मात्परस्य रादिप्रत्ययस्यैवाऽसम्भवात् । "लोट् च" । "विधिनिमन्त्रण" इति सूत्रं लिङ्ग्रहणरहितमनुवर्तते

विध्याद्यर्थेषु धातोर्लोट् स्यात् ।

**आशिषि लिङ्लोटौ ३ । ३ । १७३**

**एरुः ३ । ४ । ८६**

लोट इकारस्य उः स्यात् । भवतु ।

**तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७ । १ । ३५**

आशिषि तुह्योस्तातङ् वा स्यात् । परत्वादनेकाल्त्वात्सर्वादेशः । भवतात् ॥

**लोटो लङ्वत् ३ । ४ । ८५**

लोटो लङ इव कार्यं स्यात् । लोटस्तामादयः सलोपश्च ॥

**तस्थस्थमिपां तान्तन्तामः ३ । ४ । १०१**

ङित्तश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥

**सेर्ह्यपिच्च ३ । ४ । ८७**

लोटः सेर्हिः स्यात सोऽपिच्च ॥

**अतो हेः ६ । ४ । १०५**

अतः परस्य हेर्लुक् स्यात् । भव, भवतात् । भवतम् । भवत ॥

**मेर्निः ३ । ४ । ८९**

लोटो मेर्निः स्यात् ॥

**आडुत्तमस्य पिच्च ३ । ४ । ९२**

लोडुत्तमस्याट् स्यात् पिच्च । हिन्योरुत्वं न 'इत्वोच्चारणसामर्थ्यात्' । भवानि ।

**ते प्राग्धातोः १ । ४ । ८० ।**

ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ।

**आनि लोट् ८ । ४ । १६**

---

तदाह–विध्यादिष्विति । अनेकाल्त्वात्सर्वादेशः । "ङिच्च" इत्यस्याऽनेकाल्सूत्रबाधकत्वादिदमयुक्तमिति नाशङ्क्यम् । अन्त्यादेशमात्रप्रयोजनकङकारवत्स्वनङादिषु चरितार्थस्य तातङि मन्थरप्रवृत्तस्य "ङिच्च" इत्यस्य "अनेकाल्" सूत्रेण परेण बाधादिति भावः । "लोटो लङ्वत्" इति । लोट इत्युपमेये षष्ठीदर्शनादुपमानादपि षष्ठ्यन्तादेव वतिस्तदाह—तेन तामादयः सलोपश्चेति । "तस्थस्थमिपां तान्तन्तामः" । तस् च थस् च थश्च मिप् चैषामितरेतरद्वन्द्वः तस्थ

...पसर्गस्थान्निमित्तात्परस्य लाडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । ( दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ) दुःस्थितिः । दुर्भवानि । ( अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ) अन्तर्भवाणि ॥

## नित्यं ङितः ३ । ४ । ९९

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । "अलोऽन्त्यस्य" इति सलोपः । भवाव । भवाम ॥

## अनद्यतने लङ् ३ । २ । १११

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः ६ । ४ । ७१

एष्वङ्गस्याट् स्यात्स चोदात्तः ॥

## इतश्च ३ । ४ । १००

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् ॥ अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

## विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ३ । ३ । १६१

एष्वर्थेषु धातोर्लिङ् स्यात् ॥

## यासुट् परस्मैपदेषूदात्तो ङिच्च ३ । ४ । १०३

लिङः परस्मैपदानां यासुडागमो ङिच्च ॥

## लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९

---

स्थानिमपस्तेषाम् । तां च तं च तश्चाऽम् चैषामितरेतरद्वन्द्वः तान्तन्तामः । "इतश्च" "नित्यं ङित" इत्यतो ङित इत्यनुवर्तते । "लस्य" इत्याधिक्रियते । "इतश्च लोप" इत्यतः परस्मैपदेष्वित्यनुवर्त्य षष्ठ्येकवचनान्ततया विपरिणमय्येत इत्यनेन विशेष्यते तस्मात्तदन्तविधिस्तदाह—ङितो लस्येति । विधिनिमन्त्रणेति । विधिश्च निमन्त्रणं चाऽऽमन्त्रणं चाऽधीष्टश्च संप्रश्नश्च प्रार्थनं च विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनानि तेषु । विधिः प्रेरणम् भृत्यादेर्निकृष्टस्य प्रवर्तनं, निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । लिङः सलोपो । "रुदादिभ्यः सार्वधातुके" इत्यतः सार्वधातुके इत्यनुवर्तते सेति लुप्तषष्ठीकं पृथक् पदम् अनन्त्यस्येत्यनेन विशेष्यते । विशे·

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति प्राप्ते ॥

**अतो येयः ७ । २ । ८०**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात् । गुणः ।

**लोपो व्योर्वलि ६ । १ । ६६**

वकारयकारयोर्लोपः स्याद्वलि । भवेत् । भवेताम् ॥

**झेर्जुस् ३ । ४ । १०८**

लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥

**लिङाशिषि ३ । ४ । ११६**

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥

**किदाशिषि ३ । ४ । १०४**

आशिषि लिङो यासुट् कित् । "स्कोः संयोगाद्योः" इति सलोपः ॥

**क्ङिति च १ । १ । ५**

गित्कित्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥

**लुङ् ३ । २ । ११०**

भूतार्थे धातोर्लुङ् स्यात् ॥

**माङि लुङ् ३ । ३ । १७५**

सर्वलकारापवादः ॥

**स्मोत्तरे लङ् च ३ । ३ । १७६**

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥

**च्लि लुङि ३ । १ । ४३**

---

षणेन तदन्तविधिस्तदाह—सार्वधातुकलिङोऽनन्त्यस्येति । "अतो येयः" । अत्र यास् इय इति स्थितौ सकारस्य रुत्व यत्वे लोपे च गुणश्छया त्रैपादिकयलोपस्यासिद्धत्वेन गुणाऽप्राप्त्या या इय् इत्येव निर्देष्टव्ये कृतसन्धिनिर्देश आर्ष इति बोध्यम् । "किदाशिषि" । यासुटः कित्त्वविधानं गुणवृद्धिप्रतिषेधार्थं तच्चङित्वेनैव सिद्धं चेत् व्यर्थं कित्त्वविधानमिति नाशङ्क्यम् । इज्यादित्यादौसम्प्रसारणाय तदावश्यकत्वात् । "स्मोत्तरे लङ् च" । स्म उत्तरः परो यस्मात्स स्मोत्तरस्तस्मिन् । चकाराल्लुङः

...सुद्यपवादः ॥

**च्लेः सिच् ३ । १ । ४४**

इचावितौ ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७**

एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥

**भूसुवोस्तिङि ७ । ३ । ८८**

भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

**न माङ्योगे ६ । ४ । ७४**

अडाटौ न स्तः । मा भवान् भूत् । मास्म भवत्, मास्म भूत् ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३ । ३ । १३९**

हेतुहेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् । अत सातत्यगमने ॥ २ ॥ अतति ।

**अत आदेः ७ । ४ । ७०**

अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ।

---

सम्बन्धः । तदाह—चाल्लुङीति । "च्लेः सिच्" । मन्यतेर्लुङि अमंस्तेत्यादौ "अनिदिताम्" इति नलोपाभावाय सिच इकारस्येत्संज्ञेति बोध्यम् । "गातिस्थाघुपाभूभ्यः" । गातिश्च स्थाश्च घुश्च पाश्च भूश्च गातिस्थाघुपाभुवस्तेभ्यः । अत्र गातीति श्तिपा निर्देशः । अत्र गाशब्देन इण्स्थानिक आदेशभूतो गा गृह्यते । यस्य पाधातोः पिबादेशः स पाधातुर्गृह्यते । तदाह-गापाविहेणादेशपिबतीति । "भूसुवोस्तिङि" । अत्र भूसूशब्दाभ्यां भूसत्तायाम् षूङ्गर्भविमोचने इत्यनयोर्ग्रहणम् । "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" । लिङो निमित्तं लिङ्निमित्तं तस्मिन् । क्रियाया अतिपत्तिरनिष्पत्तिरसिद्धिरिति यावत् क्रियातिपत्तिस्तस्याम् । लिङ्निमित्तं च हेतुहेतुमद्भावादि ( कार्यकारणभावादि ) तदाह-हेतुहेतुमद्भावादिलिङ्निमित्तमिति । सातत्यगमने । सततस्य भावः सातत्यं सातत्यं च तद्गमनं तस्मिन् । गमनञ्च उत्तरदेशसंयोगानुकूलव्यापारः । तथा च—अनवरतोत्तरदेशसंयो-

## आडजादीनाम् ६ । ४ । ७२

अजादेरङ्गस्याट् स्यात् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते ॥

## अस्तिसिचोऽपृक्ते ७ । ३ । ९६

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् ॥

## इट ईटि ८ । २ । २८

इटः परस्य सस्य लोपः स्यादीटि परे । ( सिज्लोप एकादेशे सिद्धो वाच्यः ) आतीत् । आतिष्टाम् ॥

## सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बधिनो झेर्जुस् स्यात् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । षिध गत्याम् ।३ ॥

## ह्रस्वं लघु १ । ४ । १०

## संयोगे गुरु १ । ४ । ११

संयोगे परे ह्रस्वं गुरु स्यात् ॥

## दीर्घं च १ । ४ । १२

गुरु स्यात् ॥

## पुगन्तलघूपधस्य च ७ । ३ । ८६

---

गानुकूलव्यापारेऽर्थे धातुरयमिति बोध्यम् । "अस्तिसिचोऽपृक्ते" । अस्ति अश्चेत्यनयोः समाहारद्वन्द्वः सिचस् अस्तिश्च सिचश्चेति कर्मधारयः, अस्तिसिचस् तस्मात्पञ्चम्याः सौत्रत्वाल्लुक् । अस्तिश्चात्र विद्यमानार्थकस्तदाह–विद्यमानात्सिचोऽस्तेश्चेति । "इट ईटि" । रात्सस्य" इत्यतः सस्य "संयोगान्तस्य लोपः" इत्यतो लोप इत्यनुवर्तते तदाह–इटः परस्य सस्य लोप इति । इटः किम् ? अहार्षीत् । ईटि किम् ? आतिष्टाम् । "सिजभ्यस्तेति" । सिच्च अभ्यस्तं च विदिश्च सिजभ्यस्तविदयस्तेभ्यः सिजभ्यस्तविदिभ्यः । "नित्यं ङितः" इत्यतो ङित इत्यनुवर्तते । "झेर्जुस्" इति चानुवर्तते तदाह—सिचोऽभ्यस्ताद्विदेश्चेति । पुगन्तलघूपधेति । पुक् अन्तो यस्य तत् पुगन्तं लघ्वी उपधा यस्य तत् लघूपधम् पुगन्तं च लघूपधं च पुगन्तलघूपधं तस्य । "सार्वधातुकार्धधातुकयोः" इति सर्वमनुवर्तते । अ-

...गन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्धधातुकयोः । "धात्वादे०" इति सः । सेध त । षत्वम् । सिषेध ॥

## असंयोगाल्लिट् कित् १ । २ । ५

असंयोगात्परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवं चिती सञ्ज्ञाने ॥४॥ चेतति । चिचेत । चेतिता । चेतिष्यति । चेततु । अचेतत् । चेतेत् । चित्यात् । अचेतीत् । अचेतिष्यत् । शुच शोके ॥ ५ ॥ शोचति । शुशोच । शोचिता । शोचिष्यति । शोचतु । अशोचत् । शोचेत् । शुच्यात् । अशोचीत् । अशो ॥ चिष्यत् । गद व्यक्तायां वाचि ॥ ६ ॥ गदति ॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८ । ४ । १७

उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु परेषु । प्रणिगदति ।

## कुहोश्चुः ७ । ४ । ६२

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् ॥

## अत उपधायाः ७ । २ । ११६

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥

## णलुत्तमो वा ७ । १ । ९१

उत्तमो णल्वा णित्स्यात् । जगाद, जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥

## अतो हलादेर्लघोः ७ । २ । ७

हलादेर्लघोरकारस्य वृद्धिर्वा स्यादिडादौ परस्मैपदे सिचि । अगादीत्, अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे ॥ ७ ॥

## णो नः ६ । १ । ६५

---

त्राङ्गस्येत्यवयवषष्ठी । सार्वधातुकादिकमङ्गस्य विशेषणमन्यदङ्गस्य तदाह—पुगन्तस्येत्यादि । "अतो हलादेः" । "सिचि वृद्धिः परस्मैपदेषु" इति सूत्रमनुवर्तते । "नेटि" इत्यत इटीति । "ऊर्णोतेर्विभाषा" इत्यतो विभाषाग्रहणञ्चानुवर्तते तदाह—हलादेर्लघोरकारस्येडादावित्यादि । "णो नः" । "धात्वादेः षः सः"

धात्वादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द्दनाटिनाथ्नाधृनन्दूनक्कनृतः ॥

## उपसर्गादसमासेऽपि णोपदेशस्य ८ । ४ । १४

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् । प्रणदति । प्रणिनदति । नदति । ननाद ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२०

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वं स्यादभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः ।

## थलि च सेटि ६ । ४ । १२१

प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद, ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् । टुनदि समृद्धौ ॥ ८ ॥

## आदिर्ञिटुडवः १ । ३ । ५

उपदेशे धातोराद्या एते इतः स्युः ॥

## इदितो नुम् धातोः ७ । १ । ५८

नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् । अर्च पूजायाम् ॥ ९ ॥ अर्चति ।

## तस्मान्नुड् द्विहलः ७ । ४ । ७१

द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । व्रज गतौ १० व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥

## वदव्रजहलन्तस्याचः ७ । २ । ३

वदेर्व्रजेर्हलन्तस्य चाङ्गस्य वृद्धिः स्यात् सिचि परस्मैपदेषु । अव्राजीत् अव्रजिष्यत् । कटे वर्षावरणयोः ॥ ११ ॥ कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ।

## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७ । २ । ५

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अक-

---

इति सूत्राद्धात्वादेरित्यनुवर्तते तदाह-धात्वादेर्णस्येति । "ह्यन्तक्षणश्वस" । ग्रह उपादाने, अग्रहीत् । टुवम् उद्गिरणे, अवमीत् । हय गतौ, अहयीत् । क्षणु हिं-

...ग अकटिष्यत् ॥ गुपू रक्षणे ॥ १२ ॥

**गुपूधूपविच्छिपणिपनिभ्य आयः ३ । १ । २८**

एभ्य आयः प्रत्ययः स्यात् स्वार्थे ॥

**सनाद्यन्ता धातवः ३ । १ । ३२**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः स्युः । धातुत्वाल्लडादयः । गोपायति ॥

**आयादय आर्धधातुके वा ३ । १ । ३१**

आर्धधातुकविवक्षायामायादयो वा स्युः । (कास्यनेकाच आम् वक्तव्यः) लिटि आस्कासोराम्विधानान्मस्य नेत्त्वम् ॥

**अतो लोपः ६ । ४ । ४८**

आर्धधातुकोपदेशे यददन्तं तस्यातो लोपः स्यादार्धधातुके ॥

**आमः २ । ४ । ८१**

आमः परस्य लुक् स्यात् ॥

**कृञ् चानुप्रयुज्यते लिटि ३ । १ । ४०**

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥

**उरत् ७ । ४ । ६६**

अभ्यासऋवर्णस्यात् स्यात् । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते ॥

**द्विर्वचनेऽचि १ । १ । ५९**

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥

**एकाच उपदेशेऽनुदात्तात् ७ । २ । १०**

उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न स्यात् ।

---

सायाम्, अक्षणीत् । श्वस् प्राणने । अश्वसीत् । जागृ निद्राक्षये, अजागरीत् । टुओश्वि गतिवृद्ध्योः, अश्वयीत् । ण्यन्तस्य नयतेः—अनयीत् । इमानि सूत्रोपात्तधातू नामुदाहरणानि । "गुपूधूप" । गुपू रक्षणे । धूप सन्तापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पन च व्यवहारस्तुत्यर्थकः । "सनाद्यन्ताः" । सन् आदिर्येषां ते सनादयस्तेऽन्ते येषां ते सनाद्यन्ताः । सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विप्णिज्यङौ तथा । यगाययेयङ णिङ् चेति द्वादशामी सनादयः ॥ "एकाच उपदेशे"

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

कान्तेषु—शक्लेकः । चान्तेषु--पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु--प्रच्छेकः । जान्तेषु त्यज्निजिर्भज्भञ्जभुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्जविजिर्स्वञ्जसञ्ज्सृजः पञ्चदशः । दान्तेषु अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यतिर्विनदविन्द्शद्सद्स्विद्यस्कन्दहदः षोडश । धान्तेषु क्रुध्क्षुध्बुधबन्ध्युधरुधराधव्यधशुधसाध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्क्षुप्क्षिप्तप्तिप्तृप्यदृप्यलिपलुप्वप्शपस्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुषद्विष्दुषपुष्यपिष्विष्शिषशुष्श्लिष एकादश । सान्तेषु घस्वसती द्वौ । हान्तेषु दहदिह्दुहनह्मिहरुह्लिह्वहोऽष्टौ ॥ अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् । गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ७ । २ । ४४

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात् । गुप्यात् । अगोपायीत् ॥

## नेटि ७ । २ । ४

इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात् । अगोपीत्, अगौप्सीत् ॥

## झलो झलि ८ । २ । ४

झलः परस्य सस्य लोपः स्याज्झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षि क्षये ॥ १२ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । "एकाच" इति निषेधे प्राप्ते ॥

---

अत्रोपदेशपदं देहलीदीपन्यायेनोभयत्रान्वयी एकाचि, अनुदात्ते च ॥ ऊदृदन्तैरिति । ऊकारान्तः । यु मिश्रणामिश्रणयोः । 'रु शब्दे' । 'क्ष्णु, तेजने' । 'शीङ्, स्वप्ने' । 'स्नु, प्रस्रवणे' । 'णु, स्तुतौ । 'टुक्षु, शब्दे' । टुओश्वि गतिवृद्ध्योः, डीङ् विहायसा गतौ । 'श्रिञ् सेवायाम्' । 'वृङ, संभक्तौ' । वृञ्, संवरणे' । एतान् धातून् वर्जयित्वाऽन्ये धातवोऽजन्तेषु निहता अनुदात्ताः स्मृता कथिताः॥ स्वरतिसूतीते । स्वरतिश्च सूतिश्च सूयतिश्च धूञ् च ऊदिश्चैतेषां समाहारद्वन्द्वः स्वरतिसूतिसूयतिधूञूदित् तस्मात् ।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७ । २ । १३

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥

## अचस्तास्वत्थल्यनिटो नित्यम् ७ । २ । ६१

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न स्यात् ॥

## उपदेशेऽत्वतः ७ । २ । ६२

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण् न स्यात् ॥

## ऋतो भारद्वाजस्य ७ । २ । ६३

तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मते । तेन अन्यस्य स्यादेव। अयमत्र संग्रहः ॥

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋन्दत ईदृक् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

चिक्षयिथ, चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् ।

## अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५

अजन्ताङ्गस्य दीर्घः स्यात् यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥

## सिचि वृद्धिः परस्मैपदेषु ७ । २ । १

इगन्ताङ्गस्य वृद्धिःस्यात् परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् । तप संतापे॥१४॥ तपति । तताप । तेपतुः । तेपुः । तेपिथ, ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् अताप्ताम् । अतप्स्यत् । क्रमु पादविक्षेपे ॥ १५ ॥

---

"आर्धधातुकस्येड्वलादेः" इति सूत्रमनुवर्तते तदाह—स्वरत्यादेरित्यादि । "कृसृभृ" कृसृमृ एषामनुदात्तत्वात् "एकाच उपदेश" इति प्रकृत्याश्रयनिषेध प्राप्तौ वृद्द्रुवोस्तु उदात्तत्वात् "श्र्युकः किति" इति प्रत्ययाश्रयनिषेधप्राप्तावयं नियम इत्याह—क्रादिभ्य इति । अचस्तास्वदिति । तासौ इव तास्वत् सप्तम्यन्ताद्वतिः । "उपदेशेऽत्वतः" । अत् अस्यास्तीति अत्वान् तस्मात् अत्वतः । अकारवत इत्यर्थः । सिचिवृद्धिः । अनेन वृद्धिशब्देन वृद्धेर्विधानादिक इति षष्ठ्यन्तपदोपस्थितिः अङ्गस्येत्यधिकृतं विशेष्यमादाय विशेषणेनेका तदन्तविधिस्तदाह—इगन्ताङ्गस्येति । संताप इति । सन्तापनं संतापस्तस्मिन् । संतापशब्दो दुःखवाचकः । पादविक्षेप इति । विक्षेपणं विक्षेपः पादयोर्विक्षेपः पादविक्षेपस्तस्मिन् । पादविक्षेपः

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३ । १ । ७०**

एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥

**क्रमः परस्मैपदेषु ७ । ३ । ७६**

क्रमो दीर्घः स्यात् परस्मैपदे शिति परे । क्राम्यति, क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु । अक्राम्यत्, अक्रामत् । क्राम्येत् । क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् । पा पाने ॥ १६ ॥

**पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७ । ३ । ७८**

पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥

**आत औ णलः ७ । १ । ३४**

आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥

**आतो लोप इटि च ६ । ४ । ६४**

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । पपतुः, पपुः । पपिथ, पपाथ । पपथुः, पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥

**एर्लिङि ६ । ४ । ६७**

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । "गातिस्था" इति सिचो लुक् । अपात् । अपाताम् ॥

**आतः ३ । ४ । ११०**

सिज्लुकि आदन्तादेव झेर्जुस् स्यात् ॥

**उस्यपदान्तात् ६ । १ । ९६**

---

पादप्रक्षालनम् । "वा भ्राशभ्लाश" इति । अत्र "दिवादिभ्यः श्यन्" इत्यतः श्यनोऽनुवृत्तिस्तदाह—एभ्यः श्यन्वेति । पादीनामिति । पा पाने । ध्मा शब्दाग्निसंयोगयोः । ष्ठा गतिनिवृत्तौ । म्ना अभ्यासे । दाण् दाने । दृशिर् प्रेक्षणे । ऋ गतौ । सृ गतौ । शद्लृ शातने । षद्लृ विशरणगत्यवसादनेषु इत्यादीनामित्यर्थः । "आतो लोप इटि च" । आर्धधातुके इत्यनुवर्तते । 'दीडो युडचि क्ङिति' इत्यतोऽचीति क्ङिति चानुवर्तते तदाह—अजाद्योरार्धधातुकयोरिति । आतः । "झेर्जुस्" इत्यनेन जुसि

...पदान्तादकारादुसि पररूपमेकादेशः स्यात् । अपुः । अपास्यत् । ग्लै हर्षक्षये॥७॥ ग्लायते ॥

## आदेच उपदेशेऽशिति ६ । १ । ४५

उपदेशे एजन्तस्य धातोरात्वं स्यात् न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥

## वाऽन्यस्य संयोगादेः ६ । ४ । ६८

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं स्यात् आर्धधातुके किति लिङि । ग्लेयात्, ग्लायात् ॥

## यमरमनमातां सक् च ७ । २ । ७३

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् ॥ ह्वृ कौटिल्ये ॥ १८ ॥ ह्वरति ॥

## ऋतश्च संयोगादेर्गुणः ७ । ४ १०

ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्यात् लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार, जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥

## ऋद्धनोः स्ये ७ । २ । ७०

ऋतो हन्तेश्च स्यस्येट् स्यात् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥

## गुणोऽर्तिसंयोगाद्योः ७ । ४ । २९

अर्तेः संयोगादेॠदन्तस्य च गुणः स्यात् यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ 'श्रु श्रवणे ॥ १९ ॥

## श्रुवः शृच ३ । १ । ७४

---

सिद्धे सूत्रमिदं व्यर्थं सन्नियमार्थंन्तदाह—आदन्तादेवेति । "यमरमनमाताम्"। "आर्धधातुकस्येड्वलादे"रित्यत इडित्यनुवर्तते ( "अञ्जेः सिचि" ) इत्यतः सिज्ग्रहणं "स्तुसुधूञ्भ्यः" इत्यतः परस्मैपदग्रहणं चानुवर्तते तदाह—एभ्य सिच इट् स्यात्परस्मैपदेष्विति । 'ऋद्धनोः स्ये" । पूर्वपदं पञ्चम्यर्थे षष्ठ्यन्तम् । उत्तरपदं षष्ठ्यर्थे सप्तम्यन्तम् तदाह—ऋतो हन्तेश्च सस्येति । गुणोर्ति । "रीङ् ऋतः" इत्यस्मादृत इति वर्तते, तच्च संयोगादित्वेन विशेष्यते विशेषणेन च तदन्तविधिः । "अयङ् यि क्ङिति" सूत्राद् यीत्यनुवर्तते । तच्च लिङो विशेषणम् "रिङ् शयग्लिङ्क्षु" इति सूत्रात् यग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनादित्यत आह—अर्तेः संयोगादेॠदन्तस्य चेत्यादि । "श्रुवः शृच"। अत्र चकाराद् "स्वा-

श्रुवः श्रृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ॥

## सार्वधातुकमपित् १ । २ । ४

अपित्सार्वधातुकं ङिद्वत् स्यात् । शृणुतः ॥

## हुश्नुवोः सार्वधातुके ६ । ४ । ८७

हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति ॥ शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥

## लोपश्चास्यान्यतरस्यां म्वोः ६ । ४ । १०७

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यात् म्वोः परयोः । शृण्वः । शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव । शुश्रुव, शुश्रुम । श्रोता । श्रोष्यति । शृणोतु । शृणुतात् । शृणुताम् । शृण्वन्तु ॥

## उतश्च प्रत्ययादसंयोगपूर्वात् ६ । ४ । १०६

असंयोगपूर्वात्प्रत्ययादुतो हेर्लुक् स्यात् । शृणु । शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृणुव, अशृण्व । अशृणुम । अशृण्म । शृणुयात् । शृणुयाताम् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् । गम्लृ गतौ ॥ २० ॥

## इषु गमियमां छः ७ । ३ । ७७

एषां छः स्यात् शिति । गच्छति । जगाम ।

## गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ॥

## गमेरिट् परस्मैपदेषु ७ । २ । ५८

गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अ

---

दिभ्यः श्नुः" इत्यस्मात् श्नुरित्यनुवर्तते तदाह-श्नुप्रत्ययश्चेति । उतश्चेति । असंयोगपूर्वात्प्रत्ययादुत इत्यस्याऽसंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गादित्यर्थः । "अतो हेः" इत्यतो हेर्लुगित्यनुवर्तते तदाह-गमहनेति । "ऊदुपधाया गोहः" इत्यत उपधाया इत्यनुवर्तते । "अचि श्नुधातुभ्रुवाम्" इत्यतोऽचीत्यनुवर्तते तेन तदादि क्ङि

...त् । गच्छेत् । गम्यात् ॥

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३ । १ । ५५**

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ्स्यात् परस्मैपदेषु । अगमत् । अगमिष्यत् ॥

इति परस्मैपदिनः ॥

---

## अथात्मनेपदिनः ॥

एध वृद्धौ ॥ १ ॥

**टित आत्मनेपदानां टेरे ३ । ४ । ७९**

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥

**आतो ङितः ७ । २ । ८१**

आतः परस्य ङितामाकारस्य इय् स्यात् । एधेते एधन्ते ॥

**थासः से ३ । ४ । ८०**

टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । "अतो गुणे" । एधे । एधावहे । एधामहे ॥

**इजादेश्च गुरुमतोऽनृच्छः ३ । १ । ३६**

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १ । ३ । ६३**

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात् ॥

**लिटस्तझयोरेशिरेच् ३ । ४ । ८१**

---

धिस्तदा०-उपधाया लोपः स्यादजादावङिति । पुषादीति । पुष् आदिर्येषां ते पुषादयः । द्युत् आदिर्येषां ते द्युतादयः लृत् इत् यस्य स लृदित् पुषादिश्च द्युतादिश्च लृदिच्चेत्येषां समाहारद्वंद्वः पुषादिद्युतादिलृदित् तस्मात् । आम्प्रत्ययवत् । अत्राऽऽम्प्रत्ययशब्द आम्प्रकृत्यर्थकः । अनुप्रयोगस्येति पदमनुप्रयुज्यमानादित्यर्थकस्तदा०-आम्प्रकृत्येत्यादि । "लिटस्तझयोः" । तश्च झश्च तझौ । एश् च इरेच् चे-

लिडादेशयोस्तझयोरेशिरेचौ स्तः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ॥

## इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८ । ३ । ७८

इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥

## धि च ८ । २ । २५

धादौ प्रत्यये परे सस्य लोपः स्यात् । एधिताध्वे ॥

## ह एति ७ । ४ । ५२

तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे एधिष्यामहे ॥

## आमेतः ३ । ४ । ९०

लोट एकारस्यामु स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥

## सवाभ्यां वामौ ३ । ४ । ९१

सवाभ्यां परस्य लोटेतः क्रमाद्वामौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥

## एत ऐ ३ । ४ । ९३

लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै । "आटश्च" । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥

## लिङः सीयुट् ३ । ४ । १०२

लिङात्मनेपदस्य सीयुडागमः स्यात् । एधेत । एधेयाताम् ।

## झस्य रन् ३ । ४ । १०५

लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ॥

## इटोऽत् ३ । ४ । १०६

---

ति समाहारद्वन्द्वः एशिरेच् । लिट इति स्थानषष्ठी तदाह-लिडादेशयोरित्यादि । एशि शकारोच्चारणमकारविशिष्टतकारस्यादेशत्वलाभार्थम् । "इणः षीध्वम्" । षीध्वं च लुङ् लिट् चेतीतरेतरद्वन्द्वः षीध्वंलुङ्लिटस्तेषाम् । अङ्गादिति विशेष्यमादायेण इति विशेषणात्तदन्तविधिः । "इण्को" रित्यत इणोऽनुवृत्तिसम्भवादत्रत्येणग्रहणं व्य-

...ङिडादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि ॥

## सुट् तिथोः ३ । ४ । १०७

लिङस्तकारथकारयोः सुट् स्यात् । यलोपः । आर्धधातुकत्वात् सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ।

## आत्मनेपदेष्वनतः ७ । १ । ५

अनकारात्परस्यात्मनेपदस्य झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः। ऐधिष्येथाम् । ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि । कमु कान्तौ ॥ २ ॥

## कमेर्णिङ् ३ । १ । ३०

कमेर्णिङ् स्यात् स्वार्थे । ङित्वात्तङ् । कामयते ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । "आयादय" इति णिङ् वा । चकमे । चकमाते चकमिरे चकमिषे । चकमाथे । चकमिढ्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे। कमिता । कामयिष्येते। कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥ कमिषीष्ट ॥

## विभाषेटः ८ । ३ । ७९

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः स्यात् । कामयिषीढ्वम् । कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम् ।

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३ । १ । ४८

ण्यन्ताच्छ्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे । कामि अ त इति स्थिते ॥

## णेरनिटि ६ । ४ । ५१

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥

## णौ चङ्युपधाया ह्रस्वः ७ । ४ । १

ढ्वमिति नाशङ्क्यम् । कवर्गात्परस्य धस्य ढत्वाभावाय तस्य सार्थक्यात् । अत एव पक्षीष्वमित्यत्र ढत्वाभावसिद्धिः । कान्तौ । कान्तिरिच्छा । स्वार्थ इति । येषां प्रत्ययानामर्थो न निर्दिष्टस्ते स्वार्थे भवन्तीति । भावः । "विभाषेटः" । अत्र "इणः

चङि परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥

**चङि ६ । १ । ११**

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३**

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरःतस्य सनीव कार्यं स्याण्णावग्लोपेऽसति

**सन्यतः ७ । ४ । ७९**

अभ्यासस्यात इत् स्यात् सनि ॥

**दीर्घो लघोः ७ । ४ । ९४**

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत । णिङभावपक्षे ( कमेश्च्लेश्चङ् वाच्यः ) अचकमत । अकामयिष्यत । अकमिष्यत । अय गतौ॥३॥अयते ॥

**उपसर्गस्यायतौ ८ । २ । १९**

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते ॥

**दयायासश्च ३ । १ । ३७**

दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । "विभाषेटः" । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिध्वम् । आयिढ्वम् । आयिष्यत । द्युत दीप्तौ ॥ ४ ॥ द्योतते ॥

**द्युतिस्वाप्योः सम्प्रसारणम् ७ । ४ । ६७**

अनयोरभ्यासस्य सम्प्रसारणम् स्यात् दिद्युते ॥

**द्युद्भ्यो लुङि १ । ३ । ९१**

---

षाध्वं लुङ्लिटां धः" इत्येषामनुवृत्तिस्तदाह—इणः पर इति । "सन्वल्लघुनि चङ्परेऽनग्लोपे" । सनि इव सन्वत् । सप्तम्यन्ताद्वतिः । चङ्परो यस्मात्स चङ्परः । अग्लोपयतीत्यग्लोपो न अग्लोपोऽनग्लोपस्तस्मिन् । "सन्यतः" । "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते । "भृञामित्" इत्यत इदित्यनुवर्तते तदाह—अभ्यासस्येत्यादि । "उपसर्गस्यायतौ" । अनेन सूत्रेण अयधातुपरकस्योपसर्गरेफस्य लत्वं विधियते तत्रेदम्बोध्यम्—निर्दुरोरुपसर्गयोरेफस्य लत्वं भवति निलयते—दुलयते सकारान्तयोर्निसदुसोरुपसर्गयोरेफस्य लत्वं न भवति, लत्वविधायकैतत्सूत्रदृष्ट्या सकारस्थानिकरेफस्यासिद्धत्वात् । तथा च निरयते—दुरयते इत्येव प्रयोगो भवति । "दयायासश्च" । दयश्च अय च आस् चेति समाहारद्वन्द्वः

...द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । "पुषादि" इत्यङ् । अद्युतत् । अद्यो-तिष्ट । अद्योतिष्यत । एवं श्विता वर्णे ॥ ५ ॥ ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । 'रुच' दीप्तावभिप्रीतौ च ॥ ८ ॥ घुट परिवर्तने ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ सञ्चलने ॥ ११ ॥ णभ, तुभ हिंसायाम् ॥ १३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १६ ॥ ध्वंसु गतौ ॥ १७ ॥ स्रम्भु विश्वासे ॥ १८ ॥ वृतु वर्तने ॥ १९ ॥ वर्तते । ववृते । वर्तिता ।

## वृद्भ्यः स्यसनोः १ । ३ । ९२

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥

## न वृद्भ्यश्चतुर्भ्यः ७ । २ । ५९

वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् नस्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत ॥ दद दाने ॥ २० ॥ ददते ॥

## न शसददवादिगुणानाम् ६ । ४ । १२६

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न स्तः । दददे दददाते दददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत । त्रपूष लज्जायाम् ॥ २१ ॥ त्रपते ॥

## तृफलभजत्रपश्च ६ । ४ । १२२

एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते । त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत । इत्यात्मनेपदिनः ॥

अथोभयपदिनः । श्रिञ् सेवायाम् ॥ १ ॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयिता । श्रयिष्यति श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत । अश्रयत् । श्रयेत् । श्रयेत । श्रीयात्, श्रयिषीष्ट । चङ् । अशिश्रियत्, अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत ॥ भृञ् भरणे ॥ ५ ॥ भरति । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे, बभृषे । भर्तासि । भर्तासे । भरिष्यति, भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत् । भरेत ॥

---

दचायास तस्मात् । 'घुट, परिवर्तने' । परिवर्तनं सर्वतः परिभ्रमणम् । अवस्रंसने । अवस्रंसनमधः पतनम् । "न वृद्भ्यः" । "सेऽसिचि" इत्यतः से इति । "आर्धधा-तुकस्येड्वलादे" रित्यत आर्धधातुकस्येति इडिति चानुवर्तते तदाह-सादेरार्धधा-

## रिङ् शयग्लिङ्क्षु ७ । ४ । २८

शे यकि यादावार्धधातुके लिङि च ऋतोरिङ् आदेशः स्यात् । रीङ्प्रकृतेरिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥

## उश्च १ । २ । १२

ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ॥

## ह्रस्वादङ्गात् ८ । २ । २७

सिचो लोपः स्यात् झलि । अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ हृञ् हरणे ॥ ६ ॥ हरति, हरते जहार, जह्रे । जहर्थ । जह्रिव । जह्रिम । जहृषे । हर्ता । हरिष्यति, हरिष्यते । हरतु, हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात्, हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत । धृञ् धारणे ॥ ४ ॥ धरति, धरते । णीञ् प्रापणे ॥ ५ ॥ नयति, नयते । डुपचष् पाके ॥६॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्ता । भज सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्ता । भक्ष्यति, भक्ष्यते । अभाक्षीत् । अभक्त । अभक्षाताम् । यज देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥ यजति, यजते ॥

## लिट्यभ्यासस्योभयेषाम् ६ । १ । १७

वच्यादीनां ग्रहादीनां चाभ्यासस्य सम्प्रसारणं स्यात् लिटि । इयाज ॥

---

तुकस्येणूनेति । "रिङ् शय" । शश्च यक् च लिङ् चैतेषामितरेतरद्वन्द्वः । शयग्लिङ्स्तेषु । "अयङ्यि क्ङिति" इत्यतो यीति । "एतेर्लिङि" इत्यत आर्धधातुक इति । "रीङ ऋतः" इत्यत ऋत इति चानुवर्तते तदाह–शेयकीत्यादि । "उश्च" । "इको झल्" इत्यतो झल्ग्रहणं "लिङ्सिचावात्मनेपदेषु" इति पूर्वसूत्रं चानुवर्तते । झलादि च सामर्थ्यात् झलादिबोधकं तदाह–ऋवर्णात्परो झलादीत्यादि । "झलो झलि" इत्यतो झलीत्यनुवर्तते । सूत्रेऽङ्गग्रहणसत्त्वात् । "ह्रस्वादङ्गात्" । "रात्सस्य" इत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव सस्य लोपात्तत्रापि सिच एव सम्भवादाह—सिचो लोपः स्यादिति । 'हृञ्, हरणे' । 'हरणं प्रापणं ग्रहणं स्तेयः नाशनं च उदाहरणानि भारं वहति, प्रापयतीत्यर्थः । अंशं हरति स्वीकरोतीत्यर्थः । स्वर्णं हरति चोरयतीत्यर्थः । पापं हरति नाशयतीत्यर्थः । 'यज, देव' । इह देवपूजाशब्देन देवोद्देशेनविधिबोधितो द्रव्यत्यागो गृह्यते । वच्यादीनामिति । "वचिस्वपियजादीनाम्" इत्यर्थः । ग्रहादीनां ग्रहिज्यावयीत्यादीनामित्यर्थः ।

**वचिस्वपियजादीनां किति ६ । १ । १५**

वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति। ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा । "षढोः कः सि" । यक्ष्यति, यक्ष्यते । इज्यात् । यक्षीष्ट । अयाक्षीत्, अयष्ट । वह प्रापणे ॥ ९ ॥ वहति, वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ॥

**झषस्तथोर्धोऽधः ८ । २ । ४०**

झषः परयोस्तथोर्धः स्यान्नतु दधातेः । ढोढेलोपः ॥

**सहिवहोरोदवर्णस्य ६ । ३ । ११२**

अनयोरवर्णस्य ओत्स्याड्ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम्, अवक्षि । अवक्ष्वहि । अवक्ष्महि । इत्युभयपदिनः ॥

इति भ्वादयः ॥

---

## अथादादयः ।

अद भक्षणे ॥ १ ॥

**अदिप्रभृतिभ्यः शपः २ । ४ । ७२**

लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ॥

**लिट्यन्यतरस्याम् २ । ४ । ४०**

अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः ॥

**शासिवसिघसीनां च ८ । ३ । ६०**

---

**वचिस्वपियजादीनाम्** । यजादयो यथा—यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि । ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव ॥ इति । **अद भक्षणे** । भक्षणं गलबिलाधः संयोगानुकूलव्यापारः । **"अदिप्रभृतिभ्यः शपः"** । अदेरिति इका निर्देशः । आदिः प्रभृतिर्येषां तेऽदिप्रभृतयस्तेभ्यः । तद्गुणसंविज्ञानबहुव्रीहिरयम् । तेनाऽदेरपि ग्रहणम् । **"लिट्यन्यतरस्याम्"** । **"लुङ सनोर्घस्लृ"** इत्यतोऽदो घस्लृ इत्यनयोरनुवृत्तिस्तदाह—**अदो घस्लृ इति** । **उपधालोप इति** । "गमहनजनखनघसां लोपः क्ङित्यनङि" इति सूत्रेणत्यर्थः । **"शासिवसि"** । शासिश्च वसिश्च

इणूकुभ्यां परस्यैषां सस्य षः स्यात् । घस्य चर्त्वम् । जक्षतुः । जक्षुः । [illegible]सिथ जक्षथुः । जक्ष । जघास । जक्स । जक्षिव । जक्षिम । आद । आदतुः । आदुः ॥

## इडत्यर्तिव्ययतीनाम् ७ । २ । ६६

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्ता । अत्स्यति । अत्तु, अत्तात् । अत्ताम् । अदन्तु ॥

## हुझल्भ्यो हेर्धिः ६ । ४ । १०१

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि, अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥

## अदः सर्वेषाम् ७ । ३ । १००

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात् सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् अद्यासुः ।

## लुङ्सनोर्घस्लृ २ । ४ । ३७

अदो घस्लृ स्याल्लुङि सनि च । लृदित्त्वादङ् । अघसत् । आत्स्यत् । 'हन, हिंसागत्योः ॥ २ ॥ हन्ति ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७

अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्किति ङिति च परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः ॥ हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ॥

## अभ्यासाच्च ७ । ३ । ५५

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न ।

---

घसिश्चेति शासिवसिघसयस्तेषाम् । "आदेशप्रत्यययोः" इत्यत "इणकोः" इत्यस्य मूर्धन्य इत्यस्य चानुवृत्तिस्तदाह—इणकुभ्यां परस्येति । इडत्यर्तीति । जक्षिश्च अर्तिश्च व्ययतिश्च अत्यर्तिव्ययतस्तेषाम् । पञ्चम्यर्थे षष्ठी । "ऋतो भारद्वाजस्य" इत्यतः थलो नित्यग्रहणस्यानुवृत्तिस्तदाह—अद् ऋ व्येञ् इत्यादि । "अदः सर्वेषाम्" । "अड्गार्ग्यगालवयोः" इत्यतोऽडित्यनुवर्तते "रुदश्च पञ्चभ्यः" इत्यतोऽपृक्तस्य सार्वधातुकस्य चानुवृत्तिस्तदाह-अदः परस्यापृक्तसार्वधातुकस्ये-

जघान । जघ्नथ । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु, हतात् । हताम् । घ्नन्तु

## हन्तेर्जः ६ । ४ । ३६

हौ परे ॥

## असिद्धवदत्राभात् ६ । ४ । २२

इत ऊर्ध्वमापादसमाप्तेराभीयं समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात् ॥ इति जस्यासिद्धत्वान्न हेर्लुक् । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् ॥

## आर्धधातुके २ । ४ । ३५

इत्यधिकृत्य ॥

## हनो वध लिङि २ । ४ । ४२

## लुङि च २ । ४ । ४३

वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी । तेनार्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् । यु मिश्रणामिश्रणयोः ॥ ३ ॥

## उतो वृद्धिर्लुकि हलि ७ । ३ । ८९

लुग्विषये उतो वृद्धिः स्यात् । पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न भाष्ये 'पिच ङिन्न ङिच्च पिन्न' इति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । या प्रापणे ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥

## लङः शाकटायनस्यैव ३ । ४ । १११

---

ति । "असिद्धवदत्राभात्" । भात् भाधिकारम् आ अभिव्याप्येति आभात् । समानाश्रयत्वं च, असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वरूपम् । "उतो वृद्धिर्लुकि हलि" । लुकीति विषयसप्तम्यन्तम् । "नाभ्यस्तस्याचि पिति सार्वधातुके" इदं सूत्रमचीतिरहितमनुवर्तते । हलीति विशेषणेन तदादिविधिरत आह--लुग्विषये उतो वृद्धिरित्यादि । या प्रापणे । प्रापणमिह गतिः प्राप्तिर्वा । लङः शाकटायनस्य । "आत" इति सूत्रात् आत इति झेर्जुस्

आदन्तात्परस्य लङो झेर्जुस् वा स्यात्। अयुः। अयान्। यायात्। यायाताम्। यायुः यायात्। यायास्ताम्। यायासुः। अयासीत्। अयास्यत्। वा गतिगन्धनयोः ॥ ५ ॥ भा दीप्तौ ॥ ६ ॥ ष्णा शौचे ॥ ७ ॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥१३॥ पा रक्षणे ॥१४॥ ख्या प्रकथने ॥१५॥ अयं सार्वधातुके एव प्रयोक्तव्यः। विद ज्ञाने॥१६॥

## विदो लटो वा ३ । ४ । ८३

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे। वेत्ति। वित्तः। विदन्ति॥

## उषविदजागृभ्योऽन्यतरस्याम् ३ । १ । ३८

एभ्यो लिटि आम्वा स्यात्। विदेरदन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार। विवेद। वेदिता। वेदिष्यति॥

## विदांकुर्वन्त्वित्यन्यतरस्याम् ३ । १ । ४१

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने न विवक्षिते॥

## तनादिकृञ्भ्य उः ३ । १ । ७९

तनादेः कृञश्च उः प्रत्ययः स्यात्। शपोऽपवादः। विदांकरोतु॥ वेत्तु॥

---

स् इति चानुवर्तते तदाह—आदन्तात्परस्येति। "वा, गतिगन्धनयोः। गतिश्च गन्धनञ्च गतिगन्धने तयोः। गन्धनं सूचनम्। भा दीप्तौ। दीपनं दीप्तिस्तस्यां। दीप्तिः प्रकाशः। ला आदाने आदानं ग्रहणम्। दाप् लवने। लवनं छेदनम्। विदो लटो वा"। विद इति पञ्चमी न तु षष्ठी। "परस्मैपदानां णलतुस्" इति सूत्रमनुवर्तते तदाह—वेत्तेर्लटः परस्मैपदानामिति। उषविदेति। "कास्प्रत्ययादाम् मन्त्रे लिटि" इत्यत आम् लिटीत्यनयोरनुवृत्तिरत आह—लिटि आम्वेति। विदेरदन्तत्वप्रतिज्ञानादिति। आम्सन्निधौ विदेरकारान्तत्वनिपातनादित्यर्थः। तथा च—आम्सन्निधाने एवाल्लोपस्य स्थानिवत्वाद्गुणाभावः। आमोऽसन्निधाने तु गुणो भवत्येव, वेदितेत्यादौ। विदांकुर्वन्त्विति प्रयोगसिद्धौ यानि कार्याणि निपात्यन्ते तान्याह—वेत्तेर्लोटयामित्यादिना। सूत्रे इति शब्दः प्रकारार्थकस्तत्फलितमाह—पुरुषवचने न विवक्षिते इति। "तनादिकृञ्भ्यः"। तनादित्वादेव कृञोऽप्युप्रत्ययसिद्धौ पृथक् कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम्। तेन न विश्वसेदित्यादिसिद्धिः। शपोऽपवाद इति। "कर्तरि शप्, "सार्वधातुके यक्"

## अत उत्सार्वधातुके ६ । ४ । ११०

उप्रत्ययान्तस्य कृञोऽत उत्स्यात् सार्वधातुके क्ङिति । विदांकुरुतात् विदांकुरुताम् विदांकुर्वन्तु । विदांकुरु । विदांकरवाणि । अवेत् । अवित्ताम् । अविदुः॥

## दश्च ८ । २ । ७५

धातोर्दस्य पदान्तस्य सिपि परे रुर्वा स्यात् । अवेः । अवेत् । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । 'अस' भुवि' ॥ १७ ॥ अस्ति ॥

## श्नसोरल्लोपः ६ । ४ । १११

श्नस्यास्तेश्चाता लोपः स्यात् सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८ । ३ । ८७

उपसर्गेण प्रादुसश्चास्तेःसस्य षः स्यात् यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुः षन्ति । यच्परः किम् । अभिस्तः ।

## अस्तेर्भूः २ । ४ । ५२

आर्धधातुके । बभूव । भविता । भविष्यति अस्तु, स्तात् । स्ताम् । सन्तु ॥

## घ्वसोरेद्धावभ्यासलोपश्च ६ । ४ । ११९

घोरस्तेश्च एत्वं स्याद् हौ परे अभ्यासलोपश्च । एत्वस्यासिद्धत्वाद्धेर्धिः । "श्नसोः" इत्यल्लोपः । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । एधि । स्तात् । स्तम् । स्त । असानि । असाव असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् । इण गतौ ॥ २८ ॥ एति । इतः ॥

---

इत्युभयसूत्रात्कर्तरि सार्वधातुके इत्यनयोरनुवर्तनात्प्राप्तस्य शप इत्यर्थः । "अत उत्सार्वधातुके" । "गम हन जन खन घसाम्" इत्यतः क्ङितीति, "उतश्च प्रत्यया" इत्यतोऽनुवृत्तस्योतश्च प्रत्ययादित्यस्य षष्ठ्या विपरिणामः, "नित्यं करोतेः" इत्यतः करोतेरिति पदं चानुवर्तते तदाह—उप्रत्ययान्तस्य कृञ इत्यादि । एत्वस्यासिद्धत्वाद्धेर्धिरिति । "असिद्धवदत्राभात्" इत्यनेन "घ्वसोरेद्धौ" इत्यस्य "हुझल्भ्यो हेर्धिः" इत्येतदपेक्ष्याऽसिद्धत्वविधानात् झलन्तत्वादिरिति भावः। "श्नसोरित्यल्लोप इति" । अयं सकारस्यैत्वे कृतेऽकारस्य "अतो गुणः" पररूपेणैव सिद्धे लोपविधानं किमर्थमिति चेन्न । परत्वादाल्लोपस्यैव न्या-

**इणो यण् ६ । ४ । ८१**

अजादौ प्रत्यये परे । यन्ति ॥

**अभ्यासस्यासवर्णे ६ । ४ । ७८**

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥

**दीर्घ इणः किति ७ । ४ । ६९**

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ॥

**एतेर्लिङि ७ । ४ । २४**

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि। निरियात् । 'उभयत आश्रयणे नान्तादिवत्' । अभीयात् । अणः किम् ? समेयात् ।

**इणो गा लुङि २ । ४ । ४५**

"गातिस्था" इति सिचो लुक् । अगात् । ऐष्यत् । शीङ् स्वप्ने ॥ १९ ॥

**शीङः सार्वधातुके गुणः ७ । ४ । २१**

"क्ङिति च" इत्यस्यापवादः । शेते । शयाते ॥

**शीङो रुट् ७ । १ । ६**

शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । अशेत् । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयि-

---

यत्वात् । "इणो यण्" । "अचि श्नुधातुभ्रुवाम्" इत्यतोऽनुवृत्याऽचीत्यनेन तदादिविधिस्तदाह—अजादाविति । "अभ्यासस्याऽसवर्णे" । "अचि श्नुधातु" इत्यतो य्वोः इयङुवङौ अचीति पदत्रयमनुवर्तते तदाह–अभ्यासस्येवर्णोवर्ण· योरिति । "दीर्घ इणः किति" । "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येति वर्तते । "व्यथो लिटि" इत्यतो लिटीति च तदाह—इणोऽभ्यासस्येति । "एतेर्लिङि" । "केऽण" इत्यतो ह्रस्वः । "उपसर्गाद्ध्रस्व ऊहतेः" इत्यतो उपसर्गादिति वर्तते तदाह—उपसर्गात्परस्येति । उभयत आश्रयण इति । अभीयादित्यत्र पूर्वांशे पूर्वान्तवद्भावेन उपसर्गत्वं परांशे परादिवद्भावेनेण्धातुत्वमानेयामित्युभयस्याश्रयणे "अन्तादिवच्च"इति सूत्राप्रवृत्तिरिति भावः । "शीङो रुट्"।"झोऽन्त" इत्यतो झ इति "अदभ्यस्तात्" इत्यतोऽदितिचावर्तते तदाह—शीङः परस्य

पोष्ट । अशयिष्ट ॥ अशयिष्यत । इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ॥

## गाङ् लिटि २ । ४ । ४९

इङो गाङ् स्याल्लिटि । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥

## विभाषा लुङ्लृङोः २ । ४ । ५०

इङो गाङ् वा स्यात् लुङ्लृङोः ॥

## गाङ्कुटादिभ्योऽञ्णिन्ङित् १ । २ । १

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥

## घुमास्थागापाजहातिसां हलि ६ । ४ । ६६

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । दुह प्रपूरणे ॥ २१ ॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धा । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात् । दुहीत ॥

## लिङ्सिचावात्मनेपदेषु १ । २ । ११

---

ङादेशस्यात इति । गाङ् लिटि । "इणश्च" इति सूत्रादिङोऽनुवृत्तिस्तदाह—इङो गाङ् स्यादिति । अधिजगे इत्यत्र "द्विर्वचनेऽचि" इत्यत्र द्वित्वनिषेधो नाशंक्यः लिटीति द्विलकारकनिर्देशाल्लकारादौ लिटि गाङादेशविधानात्तदानीमुक्तनिषेधप्रवृत्तेर्वक्तुमशक्यत्वात् । "विभाषा लुङ्लृङोः । "इणश्च" इति सूत्रादिङ इति "गाङ् लिटि" इत्यतो गाङिति च वर्तते तदाह—इङो गाङ् वेति ।घुमास्थेति । "आतो लोप इटि च" इत्सतः क्ङितीति "आर्धधातुके" इत्यत आर्धधातुक इति च वर्तते तदाह—एषामात इत्स्यादित्यादि । 'दुह प्रपूरणे । प्रपूरणं स्याजनम् । "लिङ्सिचावात्मनेपदेषु" । "इको झल्"इत्यत इक इति, "हलन्ताच्च"इति,

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥

### शल इगुपधादनिटः क्सः ३ । १ । ४५

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥

### लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७ । ३ । ७३

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध, अधुक्षत ॥

### क्सस्याचि ७ । ३ । ७२

अजादौ तङि क्सस्य लोपः स्यात् । "अलोन्त्यस्य" इति लोपः । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः, अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि । अदुह्वहि, अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत । एवं दिह उपचये ॥२२॥ लिह आस्वादने ॥ २३ ॥ लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह, लिलिहे । लीढासि । लीढासे । लेक्ष्यति लेक्ष्यते । लेढु, लीढात् । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्, अलेड् । अलिक्षत्, अलिक्षत, अलीढ । अलेक्ष्यत्, अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥

### ब्रुवः पञ्चानामादित आहो ब्रुवः ३ । ४ । ८४

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥

### आहस्थः ८ । २ । ३५

झलि परे हस्य थः स्यात् । चर्त्वम् । आत्थ । आहथुः ॥

---

"असंयोगाल्लिट् कित्" इत्यतः किदिति च वर्तते तदाह—इक्समीपाद्धल इत्यादि । "शल इगुपधात्" इति । "च्लेः सिच्"इत्यतश्च्लेरित्यनुवर्तते । "धातोः" इत्यधिकृतं विशेष्यमादाय शल इति विशेषणेन तदन्तविधिस्तदाह—इगुपधो यः शलन्तस्तस्मादित्यादि । "लुग्वा दुहदिह" । "क्सस्याचि" इत्यतः क्सस्येति वर्तते । "आत्मनेपद" इत्यनेन तङीति लभ्यते तदाह—क्सस्य लुग्वेति । "क्सस्याचि" । अचीत्यनेन तदादिविधिः । "लुग्वा" इत्यत आत्मनेपद इति "घोर्लोपो लेटि" इत्यतो लोप इति च वर्तते तदाह—अजादौ तङीति । 'दिह, उपचये' । उपचयो वृद्धिः । ब्रुवः पञ्चानाम्" । "परस्मैपदानां णलतुस्" इति सूत्रं "विदो लटो वा" इति सूत्रात् लट इति तदाह—ब्रुवो लटस्तिबादीनामिति । "आहस्थः" । "झलो झलि" इत्यतो झलीति, "हो ढः" इत्यतो ह इति च वर्तते तदाह झलि परे हस्य थः स्यादिति । थलि परे थत्वविधानसाम-

## ब्रुव ईट् ७ । ३ । ९३

ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥

## ब्रुवो वचिः २ । ४ । ५३

आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्ता । वक्ष्यति वक्ष्यते । ब्रवीतु, ब्रूतात् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात्, ब्रुवीत । उच्यात्, वक्षीष्ट ॥

## अस्यतिवक्तिख्यातिभ्योऽङ् ३ । १ । ५२ ॥

एभ्यश्च्लेरङ् स्यात् ॥

## वच उम् ७ । ४ । २०

अङि परे । अवोचत्, अवोचत । अवक्ष्यत् , अवक्ष्यत । चर्करीतञ्च । चर्करीतमिति यङ्लुगन्तमदादौ बोध्यम् ॥ ऊर्णुञ् आच्छादने ॥ २४ ॥

## ऊर्णोतेर्विभाषा ७ । ३ । ९०

वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । (ऊर्णोतेराम्नेति वाच्यम् ) ॥

## नन्द्राः संयोगादयः ६ । १ । ३

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति ॥ नुशब्दस्य द्वित्वम् । ऊर्णुनाव ॥ ऊर्णुनुवतुः । ऊर्णुनुवुः ॥

---

ब्रुवेति "ब्रुव ईट्" इति ईट् । "ब्रुव ईट्" । "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यतः पितीति, "उतो वृद्धिर्लुकि हलि" इत्यतो हलीति च वर्तते तदाह—हलादेः पित इति । "ब्रुवो वचिः" । "आर्धधातुके" इत्यधिकृत्याह—आर्धधातुके इति । "अस्यतिवक्तिख्यातिभ्योऽङ्" । अस्यतिश्च वक्तिश्च ख्यातिश्च अस्यतिवक्तिख्यातयस्तेभ्यः । एषां श्तिपा निर्देशात् अस् वच् ख्याधातूनां ग्रहणम् । "च्लेः सिच्" इत्यतश्च्लेरिति वर्तते तदाह—एभ्यश्च्लेरङिति । 'ऊर्णुञ् आच्छादने' । आच्छादयतीति आच्छादनं तस्मिन् । आच्छादनमावरणम् । "ऊर्णोतेर्विभाषा" । "उतो वृद्धिर्लुकि हलि" इत्यतो वृद्धिः हलि पिति सार्वधातुके इति पदचतुष्टयानुवृत्तिरित्यत आह—वा वृद्धिः स्याद्धलादावित्यादि । "नन्द्राः" । "अजादेर्द्वितीयस्य" इत्यधिक्रियते । आदिग्रहणस्य न प्रकृतोपयोगित्वमित्यत आह—अचः परा इत्यादि ।

## विभाषोर्णोः १ । २ । ३

इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णुविष्यति, ऊर्णविष्यति । ऊर्णोतु, ऊर्णोतु । ऊर्णवानि, ऊर्णवै ॥

## गुणोऽपृक्ते ७ । ३ । ९१

ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुविषीष्ट ॥

## ऊर्णोतेर्विभाषा ७ । २ । ६

इडादौ परस्मैपदे परे सिचि वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत्, और्णवीत्, और्णुवीत् । और्णाविष्टाम्, और्णविष्टाम्, और्णुविष्टाम् । और्णविष्ट, और्णुविष्ट । और्णविष्यत्, और्णुविष्यत् ।

इत्यदादयः

# अथ जुहोत्यादयः

हु दानादनयोः ॥ १ ॥

## जुहोत्यादिभ्यः श्लुः २ । ४ । ७५

शपः श्लुः स्यात् ॥

## श्लौ ६ । १ । १०

धातोर्द्वे स्तः ॥ जुहोति । जुहुतः ॥

## अदभ्यस्तात् ७ । १ । ४

---

'विभाषोर्णोः" । "गाङ्कुटादिभ्यः" इत्यतो ङिदिति 'विज इट्" इत्यतो इडिति च वर्तते तदाह—इडादिप्रत्यय इति । "गुणोऽपृक्ते" । "नाभ्यस्तस्याचि" इत्येतः पिति सार्वधातुकयोः, "उतो वृद्धिर्लुकि हलि" इत्यतो हलीत्यस्य चानुवृत्तेराह-हलादावित्यादि । "ऊर्णोतेर्विभाषा" । "सिचि वृद्धिः" इति सूत्रं "नेटि" इत्यत इडिति च वर्तते तदाह-इडादाविति । 'हु दानादनयोः' । दानञ्चादनञ्च दानादने तयोः । दानं चेह वह्नौ प्रक्षेपः । अदनं भक्षणम् । "जुहोत्यादिभ्यः" "अदिप्रभृतिभ्यः शपः" इत्यतः शप इति वर्तते तदाह—शपः श्लुरिति । "श्लौ" । "लिटि धातोरनभ्यासस्य" इत्यतो धातोरिति वर्तते "एकाचो द्वे" इत्यतो द्वे इति च तदाह—धातोर्द्वे स्त इति । "अदभ्यस्तात्" । "झोऽन्त" इत्यतो

स्यात्स्यात् । "हुश्नुवोः" इति यण् । जुह्वति ॥

## भीह्रीभृहुवां श्लुवच्च ३ । १ । ३९

एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च ॥ जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ॥

## जुसि च ७ । ३ । ८३

इगन्ताङ्गस्य गुणः स्यादजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ॥ ञिभी भये ॥ २ ॥ बिभेति ॥

## भियोऽन्यतरस्याम् ६ । ४ । ११५

इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः । बिभीतः, बिभ्यति । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु, बिभितात्, बिभीतात् । अबिभेत् । बिभियात्, बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् । ह्री लज्जायाम् ॥३॥ जिह्रेति ॥ जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । अह्रैषीत् । अह्रेष्यत् । पॄ पालनपूरणयोः ॥४॥

## अर्तिपिपर्त्योश्च ७ । ४ । ७७

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥

## उदोष्ठ्यपूर्वस्य ७ । १ । १०२

अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत्स्यात् ॥

## हलि च ८ । २ । ७७

---

श इत्यनुवर्त्याह—श्लुस्यात्स्यादिति । "भीह्रीभृहुवां श्लुवच्च" । भीश्च ह्रीश्च भृश्च हुश्चेति भीह्रीभृहुवस्तेषाम् । पञ्चम्यर्थे षष्ठी । "कास्प्रत्ययादाममन्त्रे लिटि" इत्यत आम् लिटीत्यनयोरनुवृत्तिः । "आयादय आर्धधातुके वा" इत्यस्य च तदाह—एभ्यो लिट्याम्वेति । "जुसि च" "मिदेर्गुण" इत्यतोऽनुवृत्तेन गुणपदेन इक उपस्थितिः । अङ्गस्येत्यधिक्रियते तत्र विशेषणेन इका तदन्तविधिः । "क्सस्याचि" इत्यतोऽचीति वर्ततेऽत आह—इगन्ताङ्गस्येति । "भियोऽन्यतरस्याम्" । अत्रासति सार्वधातुकग्रहणे भीयते बेभीयते इत्यार्धधातुकेऽपि इत्वापत्तिरतस्तत् । हलादावित्यनुक्तौ बिभ्यतीत्यादावजादावपीत्वापत्तिः । क्ङितीत्यनुक्तौ बिभेतीत्यत्रापीत्वापत्तिरतस्तत् । "उदोष्ठ्यपूर्वस्य" । अत्राङ्गावयवेत्यनुक्तौ श

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् हलि। पिपूर्तः। पिपुरति। पपार॥

## शृदॄप्रां ह्रस्वो वा ७।४।१२॥

एषां किति लिटि ह्रस्वो वा स्यात्। पप्रतुः।

## ऋच्छत्यॄताम् ७।४।११॥

तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणः स्यात् लिटि। पपरतुः। पपरुः॥

## वॄतो वा ७।२।३८॥

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि॥ परिता, परीता। परिष्यति, परीष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्॥

## सिचि च परस्मैपदेषु ७।२।४०॥

अत्र इटो न दीर्घः। अपारिष्टाम्। अपरीष्यत्, अपरिष्यत्। ओहाक् त्यागे॥९॥ जहाति॥

## जहातेश्च ६।४।११६॥

इद् वा स्याद्धलादौ क्ङिति सार्वधातुके॥ जहितः॥

## ई हल्यघोः ६।४।११३॥

श्नाभ्यस्तयोरात ईत्स्यात् सार्वधातुके क्ङिति हलि न तु घोः। जहीतः॥

## श्नाभ्यस्तयोरातः ६।४।११२॥

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। जहति। जहौ। हाता। हास्यति। जहातु, जहितात्, जहीतात्॥

## आ च हौ ६।४।११७॥

धातोः सम्पूर्वकात् क्ते समीर्ण इतीष्टप्रयोगस्थाने समूर्णां इत्यनिष्टापत्तिरिति बोध्यम्। "शृदॄप्रां"। 'शॄ हिंसायाम्'। 'दॄ, विदारणे' इमौ क्र्यादी। "वॄतो वा"। अत्र वॄ ॠत इति छेदः। वॄ इति निरनुबन्धग्रहणात् वृङ्वृञोरुभयोर्ग्रहणम्। "आर्धधातुकस्येड्वलादेः" इत्यत इडित्यनुवर्तते। "ग्रहोऽलिटि दीर्घः" इत्यतोऽलिटि दीर्घ, इति पदद्वयमनुवर्तते तदाह—इटो दीर्घो वा स्यान्न तु लिटीति। "सिचि च परस्मैपदेषु"। "वॄतो वा" इत्यत "इटो, दीर्घ" इति पदद्वयम्। "न लिङि" इत्यतो नेति चानुवर्तते तदाह—अत्रेटो न दीर्घ इति। "ई हल्यघोः"। "श्नाऽभ्यस्तयोरातः" इति सम्पूर्णसूत्रम् अनुवृत्तं क्ङिति सार्वधातुके इति पदद्वयसहि·

जहातेर्हौ परे आ स्याच्चार्दीदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः ।

**लोपो यि ६ । ४ । ११८ ॥**

जहातेरालोपः स्यात् यादौ सार्वधातुके । जह्यात् । "एर्लिङि" । हेयात् । अहासीत् । अहास्यत् । माङ् माने शब्दे च ॥ ६ ॥

**भृञामित् ७ । ४ । ७६ ॥**

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । मिमीते । मिमाते । मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट । अमास्त । अमास्यत । ओहाङ् गतौ ॥७॥ जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत । डुभृञ् धारणपोषणयोः ॥ ८ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रत । बिभराञ्चकार । बभार । बभर्थ । बभृव । बिभराञ्चक्रे । बभ्रे । भर्ता । भरिष्यति, भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात् । बिभ्रीत । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । अभरिष्यत् । अभरिष्यत । डुदाञ् दाने ॥ ९ ॥ ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ । ददे । दाता । दास्यति । दास्यते । ददातु ॥

**दाधा घ्वदाप् १ । १ । २० ॥**

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । "घ्वसोः" इत्येत्वम् । देहि । दत्तम् । अददात् ॥ अदत्त । दद्यात् । ददीत । देयात् । दासीष्ट । अदात् । अदाताम् । अदुः ॥

**स्थाघ्वोरिच्च १ । २ । १७ ॥**

अनयोरिदन्तादेशः स्यात् स च कित्स्यादात्मने पदे ॥ अदित । अदास्यत् । अदास्यत । डुधाञ् धारणपोषणयोः ॥ १० ॥ दधाति ।

**दधस्तथोश्च ८ । २ । ३८ ॥**

द्विरुक्तस्य झषन्तस्य धाधातोर्बशो भष् स्यात्तथोः परयोः स्ध्वोश्च परतः । धत्तः ।

---

तमनुवर्तते तदाह—श्नाभ्यस्तयोरात इत्यादि । "भृञामित्" । "णिजां त्रयाणाम्" इत्यतः त्रयाणाम् अभ्यासस्य, श्लाविति पदत्रयमनुवर्तते तदाह—भृञ् माङ् इत्यादि । "दधस्तथोश्च" । सूत्रे दध इत्यनेन कृतद्विर्वचनाभ्यासकार्यस्य धाञ एव ग्रहणं न तु 'दध, धारणे' इत्यस्य व्याख्यानात् । "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रमेकाच्ग्रहणरहितमनुवर्तते तदाह—द्विरुक्तस्य झषन्त-

दधति । दधासि । धत्थः । धत्त । दधाते । दधते । धत्से । धद्ध्वे । "ध्वसोरेद्धावभ्यासलोपश्च" ॥ धेहि । अदधात् । अधत्त । दध्यात्, दधीत । धेयात् । धासीष्ट । अधात् । अधित । अधास्यत् । अधास्यत । णिजिर् शौचपोषणयोः ॥११॥ (इर इत्संज्ञा वाच्या)

## णिजां त्रयाणां गुणः श्लौ ७ । ४ । ७५ ॥

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ ॥ नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

## नाभ्यस्तस्याचि पिति सार्वधातुके ७ । ३ । ८७ ॥

लघूपधगुणो न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट ॥

## इरितो वा ३ । १ । ५७ ॥

इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदेषु । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत ।

इति जुहोत्यादयः ।

# अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ १ ॥

## दिवादिभ्यः श्यन् ३ । १ । ६९ ॥

शपोऽपवादः । "हलि च" इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं षिवु तन्तुसन्ताने ॥ २ ॥ नृती गात्रविक्षेपे ॥ ३ ॥ नृत्यति । ननर्त । नर्तिता ॥

---

स्यंत्यादि । "नाभ्यस्तस्याचि । "पुगन्तलघूपधस्य च" इत्यतो लघूपधस्य गुण इति च पदद्वयमनुवर्तते तदाह—लघूपधगुणो न स्यादिति । 'दिवु क्रीडा' । क्त्वायामिड्विकल्परूपम् निष्ठायामिडभावरूपं च फलमुदित्करणस्य बोध्यम् । देवित्वा, द्यूत्वा । द्यूतम् । अत्र कान्तिरिच्छा न तु द्युतिस्तस्याः पृथगुपादानात् । 'नृती, गात्रविक्षेपे' । "श्वीदितो निष्ठायाम्" इत्यनेन निष्ठायामिण्निषेधरूपमीदित्करणफलम् । "सेऽसिचि" इति सूत्रेणेटो वैकल्पिकत्वात् "यस्य विभाषा" इत्यनेनैवेण्निषेधसिद्धौ तु उक्तसूत्रस्यानित्यत्वज्ञापनार्थमीदित्करणमिति बोध्यम् । तेन

## सेऽसिचि कृतचृतच्छृदतृदनृतः ७ । २ । ५७

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा स्यात् । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत् ॥ त्रसी उद्वेगे ॥ ४ ॥ "वा भ्राश" इति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥

## वा जॄभ्रमुत्रसाम् ६ । ४ । १२४

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः ॥ त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । शो तनूकरणे ॥ ५ ॥

## ओतः श्यनि ७ । ३ । ७१

लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शशुः । शाता । शास्यति ॥

## विभाषा घ्राधेट्शाच्छासः २ । ४ । ७८

एभ्यस्सिचो लुग्वा स्यात् परस्मैपदे परे । अशात् । अशाताम् । अशुः ॥

## यमरमनमातां सक्च ७ । २ । ७३

एषां सक् स्यात् एभ्यः सिच इट् स्यात् परस्मैपदेषु । इट्सकौ । अशासीत् । अशासिष्टाम् । छो छेदने ॥६॥ छ्यति । षोऽन्तकर्मणि ॥७॥ स्यति । ससौ ॥ दोऽवखण्डने ॥ ८ ॥ द्यति । ददौ । देयात् । अदात् । व्यध ताडने ॥ ९ ॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६

एषां सम्प्रसारणं स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्या-

---

'धावितमिभराजधिया' इति सिद्धम् । "सेऽसिचि कृतचृतच्छृदतृदनृतः" । "उदितो वा" इति "आर्धधातुकस्येड् वलादे"रित्यतश्चेड् वेतिपदद्वयमनुवर्तते तदाह–सादेरार्धधातुकस्येड् वेति । 'त्रसी, उद्वेगे' । उद्वेगोभयम् । "विभाषा घ्राधेट्" । "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः"इत्यतो लुगनुवर्तते "गातिस्था॰" इत्यतः सिचः परस्मैपदेषु इति च तदाह—सिचो लुग्वेति । छो छेदने । छेदनं द्वैधीकरणम् । षोऽन्तकर्मणि । अन्तकर्म विनाशः । "ग्रहिज्यावयिव्यधि" । "ष्यङः सम्प्रसारणम्" इत्यतः सम्प्रसारणमित्यनुवर्तते तदाह–एषां सम्प्रसारण-

स्तीत्।। पुष पुष्टौ ॥ १० ॥ पुष्यति । पुपोष ॥ पुपोषिथ। पोष्टा। पोक्ष्यति। पुष्यतु। अपुषत्। शुष शोषणे ॥ ११ ॥ शुष्यति। शुशोष। अशुषत्॥ णश अदर्शने ॥ १२ ॥ नश्यति। ननाश। नेशतुः ॥

## रधादिभ्यश्च ७।२।४५

रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नशिथ।

## मस्जिनशोर्झलि ७।१।६०

नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व। नेशिम,नेश्म। नशिता, नंष्टा। नशिष्यति, नंक्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्॥ षूङ् प्राणिप्रसवे ॥ १३ ॥ सूयते। सुषुवे। क्रादिनियमादिट्। सुषुविषे। सुषुविवहे। सुषुविमहे। सोता, सविता। दूङ् परितापे ॥ १४ ॥ दूयते ॥ दीङ् क्षये ॥ १५ ॥ दीयते ॥

## दीङो युडचि क्ङिति ६।४।६३

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात्( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) दिदीये ॥

## मीनातिमिनोतिदीङां ल्यपि च ६।१।५०

एषामात्वं स्यात् ल्यपि चादशित्येज्निमित्ते ॥ दाता। दास्यति। ( स्थाघ्वोरित्त्वे दीङः प्रतिषेधः )। अदास्त ॥ डीङ् विहायसा गतौ ॥ १६ ॥ डीयते। डिड्ये। डयिता। पीङ् पाने ॥ १७ ॥ पीयते। पेता। अपेष्ट। माङ् माने ॥ १८ ॥ मायते। ममे। जनी प्रादुर्भावे ॥ १९ ॥

## ज्ञाजनोर्जा ७। ३। ७९

अनयोर्जादेशः स्यात् शिति परे। जायते। जज्ञे। जनिता। जनिष्यते ॥

---

ष्यमिति। णश अदर्शने। अदर्शनं दर्शनाभावः "रधादिभ्यश्च"। "आर्धधातुकस्येड् वलादेः" अस्मात् वलादेरार्धधातुकस्येट् इति सम्बध्यते। "स्वरतिसूतिसूयति" इत्यादिना वेतिच तदाह-वलाद्यार्धधातुकस्य वेडिति। आभीयत्वेनासिद्धत्वमाशङ्क्याह-वुग्युटाविति। डीङ् विहायसा गतौ। विहायसा गतिः आकाशमार्गेण गमनम्। जनी प्रादुर्भावे। प्रादुर्भावोऽतिक्रान्तोत्पत्तिः। "ज्ञाजनोर्जा"। ज इति ह्रस्वोच्चारणेऽपि "अतो दीर्घो यञि" इति दीर्घेण सिद्धौ दीर्घोच्चारणमङ्गवृत्तपरिभाषां ज्ञापयति। तेन पिबादेशे गुणो न भवति। अदन्तत्वाश्रयणाद् गुणाभावोपपादनं तूपाया

## दीपजनबुधपूरितायिप्या-

## यिभ्योऽन्यतरस्याम् ३ । १ । ६१

एभ्यश्च्लेश्चिण् वा स्यात् एकवचने तशब्दे परे ॥

## चिणो लुक् ६ । ४ । १०४

चिणः परस्य तशब्दस्य लुक् स्यात् ॥

## जनिवध्योश्च ७ । ३ । ३५

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट ॥ दीपी दीप्तौ ॥ २० ॥ दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । पद गतौ ॥२०॥ पद्यते। पेदे। पत्ता । पत्सीष्ट ॥

## चिण् ते पदः ३ । १ । ६०

पदश्च्लेश्चिण् स्यात्तशब्दे परे ॥ अपादि । अपत्साताम् । अपत्सत ॥ विद सत्तायाम् ॥ २२ ॥ विद्यते । वेत्ता । अवित्त ॥ बुध अवगमने ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध । अभुत्साताम् । युध सम्प्रहारे ॥२४॥ युध्यते । युयुधे । योद्धा । अयुद्ध । सृज विसर्गे ॥२५॥ सृज्यते । ससृजे । ससृजिषे ॥

## सृजिदृशोर्झल्यमकिति ६ । १ । ५८

अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यति । सृक्षीष्ट । असृष्ट । असृक्षाताम् । मृष तितिक्षायाम् ॥ २६ ॥ मृष्यति, मृष्यते । ममर्ष । ममर्षिथ । ममृषे । मर्षितासि । मर्षितासे । मर्षिष्यति , मर्षिष्यते । णह बन्धने ॥२७॥ नह्यति । नह्यते । ननाह । ननद्ध, नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् , अनद्ध ॥

इति दिवादयः ।

---

न्तरामिति बोध्यम् । "दीपजनबुध" अत्राऽऽद्यास्त्रयो दिवादयः । अन्ये च त्रयो भ्वादयः । "च्लेः सिच्" इति सूत्रात् च्लेरिति, "चिण ते पदः" इत्यतश्चिण् ते इति च वर्तते तदाह–एभ्यश्च्लेश्चिणिति । "चिणो लुक्" । अत्राङ्गस्याधिकारात् चिणन्ताङ्गात्परस्यान्यप्रत्ययस्याऽभावात्तप्रत्ययस्यैव लुग्भवतीति भावः । "जनिवध्योश्च" "अत उपधायाः" इत्यत उपधाया इति, "मृजेर्वृद्धिः" इत्यतो वृद्धिरिति, "नोदात्तोपदेशस्य" इत्यतो नेति, "अचो ञ्णिति" इत्यतो ञ्णिति, "आतो युक् चिणकृतोः" इत्यतश्चिण्कृतोरिति च वर्तते तदाह-उपधाया वृद्धिर्न इत्यादि । "चिण् ते पदः"

# अथ स्वादयः ।

षुञ् अभिषवे ॥ १ ॥

## स्वादिभ्यः श्नुः ३ । १ । ७३

शपोऽपवादः । सुनोति । सुनुतः । "हुश्नुवोः" इति यण् । सुन्वन्ति । सुन्वः, सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु ७ । २ । ७२

एभ्यः सिच इट् स्यात् परस्मैपदेषु । असावीत् । असोष्ट । चिञ् चयने ॥ २ ॥ चिनोति । चिनुते ॥

## विभाषा चेः ७ । ३ । ५८

अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च ॥ चिकाय, चिचाय । चिक्ये, चिच्ये । अचैषीत् । अचेष्ट । स्तृञ् आच्छादने ॥३॥ स्तृणाति । स्तृणुते ॥

## शर्पूर्वाः खयः ७ । ४ । ६१

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो लुप्यन्ते । तस्तार । तस्तरतुः । तस्तरे ॥ "गुणोऽर्ति" इति गुणः । स्तर्यात् ॥

## ऋतश्च संयोगादेः ७ । २ । ४३

---

अत्र त इति आत्मनेपदप्रथमपुरुषैकवचनं गृह्यते व्याख्यानात् । एवं चिणोलुगित्यत्रापि बोध्यम् । 'षुञ्, अभिषवे'।अभिषवः स्नपनं स्नानं पीडनं सुरासन्धानञ्च।"स्वादिभ्यः श्नुः" । सु आदिर्येषां ते स्वादयस्तेभ्यः "कर्तरि शप्," "सार्वधातुकार्धधातुकयोः" इत्येताभ्यां कर्तरि सार्वधातुके इत्यनयोरनुवर्तनात्प्राप्तं कर्तरि शबिति शपं बाधित्वाऽनेन श्नुर्विधीयतेऽत आह-शपोऽपवाद इति । "स्तुसुधूञ्भ्यः । "इडत्यर्तिव्ययतीनाम्" इत्यत इडिति । "अञ्जः सिचि" इत्यतः सिचि इति च वर्तते तदाह-एभ्यः सिच इडिति । "विभाषा चेः" । "अभ्यासाच्च" इत्यतोऽभ्यासादिति, "चजोः कुघिण्यतोः" इत्यतः कु इति, "सन्लिटोर्जेः" इत्यतः सनि लिटीति पदद्वयं चानुवर्तते तदाह--अभ्यासात्परस्येत्यादि । "शर्पूर्वाः खयः" । हलादिः शेषापवादत्वादाह—अभ्यासस्येति । "ऋतश्च संयोगादेः" । ऋत इति विशेषणं संयोगादेरिति विशेष्यं "येन विधिः" इति तदन्तविधिः । "इट्

ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात्तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत । धूञ् कम्पने ॥४॥ धूनोति । धूनुते । दुधाव । "स्वरति" इति वेट् । दुधविथ, दुधोथ ॥

## श्र्युकः किति ७ । २ । ११

श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुवे । अधावीत् । अधविष्ट, अधोष्ट । अधविष्यत्, अधोष्यत् । अधविष्यताम्, अधोष्यताम् । अधविष्यत, अधोष्यत ॥

इति स्वादयः ।

# अथ तुदादयः ॥

तुद व्यथने ॥ १ ॥

## तुदादिभ्यः शः ३ । १ । ७७

शपोऽपवादः। तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे । तोत्ता। अतौत्सीत् । अतुत्त। णुद प्रेरणे ॥ २ ॥ नुदति । नुदते । नुनोद । नोत्ता । भ्रस्ज पाके ॥ ३ ॥ "ग्रहिज्या" इति सम्प्रसारणम् । सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः । भृज्जति । भृज्जते ॥

## भ्रस्जो रोपधयो रमन्यतरस्याम् ६ । ४ । ४७

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः ॥ बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ, बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । "स्कोः" इति सलोपः । "व्रश्च" इति षः । बभ्रष्ठ । बभर्जे । बभ्र-

---

सनि वा" इत्यत इट्वत्यनयोः, "लिङ्सिचोरात्मनेपदेषु" इत्यतो लिङ्सिचोश्चानुवर्तनादाह--ऋदन्तात्संयोगादेरित्यादि । "श्र्युकः किति" । "एकाच उपदेशेऽनुदात्तात्" इत्यत एकाजिति, "नेड् वशि कृति" इत्यतो न इति इडिति च वर्तते तदाह-एकाच इत्यादि । 'तुद, व्यथने' । व्यथनं पीडनं पीडादाने इति यावत् । अतः सकर्मकोऽयं धातुरिति बोध्यम् । "तुदादिभ्यः शः" । तुद् आदिर्येषां ते तुदादयस्तेभ्यः । कर्तरि सार्वधातुके अनयोरनुवर्तनात्प्राप्तशपं बाधित्वा शोऽनेन विधीयते तदाह—शपोऽपवाद इति । 'भ्रस्ज, पाके' । पचनं पाकस्तस्मिन् । पाकोऽत्र भर्जनरूपो नत्वोदनादेः पाकस्तत्र प्रयोगाभावात् । "भ्रस्जो रोपधयोः" । आर्धधातुके इत्यधिकारादाह--आर्धधातुक इति । ननु भ्रस्जेराशीलिङि परत्वात्स-

ज्जे। भर्ष्टा, भ्रष्टा। भ्रक्ष्यति, भर्क्ष्यति। "क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन"। भृज्ज्यात्। भृज्ज्यास्ताम्। भृज्ज्यासुः। भर्क्षीष्ट, भ्रक्षीष्ट। अभ्राक्षीत्, अभार्क्षीत्। अभर्ष्ट, अभ्रष्ट॥ कृष विलेखने॥४॥ कृषति, कृषते। चकर्ष, चकृषे॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६।१।५९

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति। क्रष्टा, कर्ष्टा। कृक्षीष्ट (स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः) अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अकृष्ट। अकृक्षाताम्। अकृक्षत। क्सपक्षे-अकृक्षत। अकृक्षाताम्। अकृक्षन्त। मिल संगमे॥५॥ मिलति। मिलते। मिमेल। मेलिता। अमेलीत्। मुच्लृ मोचने॥६॥

## शे मुचादीनाम् ७।१।५९

मुच् लुप् विद् लिप् सिच् कृत् खिद् पिशां नुम् स्यात्॥ मुञ्चति। मुञ्चते। मोक्ता मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। लुप्लृ छेदने॥७॥ लुम्पति। लुम्पते। लोप्ता। अलुपत्। अलुप्त। विद्लृ लाभे॥८॥ विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूतिमते सेट्। वेदिता। भाष्यमतेऽनिट् परिवेत्ता। षिच क्षरणे॥९॥ सिञ्चति। सिञ्चते॥

## लिपिसिचिह्वश्च ३।१।५३

एभ्यश्च्लेरङ् स्यात्। असिचत्॥

## आत्मनेपदेष्वन्यतरस्याम् ३।१।५४

लिपि सिचिह्वः परस्य च्लेरङ् वा स्यात् तङि। असिचत। असिक्त। लिप उपदेहे॥१०॥ उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। अलिपत्। अलिपत, अलिप्त॥ इति उभयपदिनः॥ कृती छेदने ११ कृन्तति। चकर्त। कर्तिता। कर्तिष्यति, कर्त्स्यति। अकर्तीत्। खिद परिघाते॥१२॥ खिन्दति। चिखेद। खेत्ता॥ पिश अवयवे॥१३॥ पिश-

---

म्प्रसारणं बाधित्वा रमागमे भ्रज्ज्यादिति स्यादित्यत आह-क्ङिति रमागममिति। "अनुदात्तस्य चर्दुपधस्य"। "आदेच उपदेशेऽशिति" इत्यत उपदेशे इति वर्तते। "सृजिदृशोर्झल्यमकिति" इत्यतोऽम् झलि अकिति इति पदत्रयमनुवर्तते तदाह—उपदेशेऽनुदात्तो य इत्यादि। "शे मुचादीनाम्"। "इदितो नुम् धातोः" इत्यतो नुमनुवर्तते तदाह—नुम् स्यादिति। "लिपिसिचिह्वश्च"। "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यतश्च्लेरङिति वर्तते तदाह-एभ्यश्च्लेरङिति। "आत्मनेपदेष्वन्यतरस्याम्"। "लिपि सिचि ह्वश्च" इति सम्पूर्णसूत्रमनुवर्तते तदाह—लिपि सिचीत्यादि। 'खिद, परिघाते'। परिघातो

ति...शिता । ओव्रश्चू छेदने ॥१४॥ वृश्चति । वव्रश्च । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् । व्यच व्याजीकरणे ॥१५॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । 'व्यचेः कुटादित्वमनसि' इति तु नेह प्रवर्तते "अनसीति पर्युदासेन तस्य कृन्मात्रविषयत्वात्" । उछि उञ्छे ॥१६॥ उञ्छति । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः ॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ १७ ॥ ऋच्छति । "ऋच्छत्यृताम्" इति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे ॥ १८ ॥ उज्झति । लुभ विमोहने ॥ १९ ॥ लुभति ।

## तीषसहलुभरुषरिषः ७ । २ । ४८

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात् । लोभिता, लोब्धा । लोभिष्यति । तृप तृम्फ तृप्तौ ॥२१॥ तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । (शे तृम्फादीनां नुम्वाच्यः) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । मृड पृड सुखने ॥ २३ ॥ मृडति । पृडति । शुन गतौ ॥२४॥ शुनति । इष इच्छायाम् ॥ २५ ॥ इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् । कुट कौटिल्ये ॥ २६ ॥ "गाङ्कुटादि" इति ङित्त्वम् । चुकुटिथ । चुकुट । चुकोट । कुटिता । पुट संश्लेषणे । २७ । पुटति । पुटिता । स्फुट विकसने । २८ । स्फुटति । स्फुटिता । स्फुर स्फुल सञ्चलने । ३० । स्फुरति । स्फुलति ॥

## स्फुरतिस्फुलत्योर्निर्निविभ्यः ८ । ३ । ७६

---

दैन्यम् । 'व्यच, व्याजीकरणे । व्याजीकरणं छद्मकरणम् । 'व्यचेः कुटादित्वमनसी'ति । अत्राऽनसीति पर्युदासः । तथा च--असुभिन्नेऽसुसदृशे प्रत्यये व्यचेः कुटादित्वमित्यर्थः । प्रसज्यप्रतिषेधाश्रयणे वाक्यभेदापत्तिरसमर्थसमासापत्तिश्च स्यात् । तत्र असुभिन्नेऽसुसदृशे कृत्प्रत्यये पर एव व्यचेः कुटादित्वविधानात् उद्विचिता उद्विचितुमित्यादौ सम्प्रसारणं भवति । तिङन्ते तु न तत्प्रवृत्तिस्तत्र "गाङ्कुटादिभ्यः" इत्यनेन ङितो विधानस्य प्रागुक्तत्वात् । 'उज्झ, उत्सर्गे' । उत्सर्गस्त्यागः । 'लुभ, विमोहने' । विमोहनमाकुलीकरणम् । "तीषसहलुभ" । पूर्वसूत्रादूलादेरित्यनुवर्त्य तत्र तीत्यस्य विशेषणत्वात् तकाररूपवलादेरिति वाच्यार्थस्य जायमानत्वात् फलितमाह--तादेरार्धधातुकस्येति । "शे तृम्फादीनां नुम्वाच्यः" । तृम्फ आदिर्येषां ते तृम्फादयस्तेषाम् । अत्राऽऽदिशब्दः प्रकारार्थकस्तेन तृम्फाभिन्नतृम्फसदृशानां ग्रहणम् । "स्फुरतिस्फुलत्योः" । "सिवादीनां वा" इत्यतो

षत्वं वा स्यात्। निष्फुरति, निष्फुलति। णू स्तवने ॥ ३१ ॥ परिणूतगुणोदयः। नुवति। नुनाव। नुविता। टुमस्जो शुद्धौ ॥ ३२ ॥ मज्जति। ममज्ज। "मस्जिनशोः" इति नुम्। (मस्जेरन्त्यात्पूर्वो नुम् वाच्यः) संयोगादिलोपः। ममङ्क्थ, ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे ॥ ३३ ॥ रुजति। रोक्ता। रोक्ष्यति। अरौक्षीत्। भुजो कौटिल्ये ॥ ३४ ॥ रुजिवत्। विश प्रवेशने ॥ ३५ ॥ विशति। मृश आमर्शने ॥ ३६ ॥ आमर्शनं स्पर्शः॥ "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ॥ अम्राक्षीत्। षदॢ विशरणगत्यवसादनेषु ॥ ३७ ॥ सीदतीत्यादि। शदॢ शातने ॥ ३८ ॥

## शदेः शितः १। ३। ६०

शिद्भाविनोऽस्मात्तङानौ स्तः। शीयते। शीयताम्। अशीयत। शीयेत। शशाद। शत्ता। शत्स्यति। अशदत्। अशत्स्यत्। कॄ विक्षेपे ॥ ३९ ॥

## ऋत इद्धातोः ७। १। १००

ऋदन्तस्य धातोरङ्गस्य इत्स्यात्। किरति। चकार। चकरतुः। चकरुः। करिता, करीता। कीर्यात् ॥

## किरतौ लवने ६। १। १४०

उपात्किरतेः सुट् स्यात् छेदने। उपस्किरति ॥

## अड्भ्यासव्यवायेऽपि ६। १। १३६

(सुट् कात् पूर्वं इति वक्तव्यम्) उपास्किरत्। उपचस्कार।

## हिंसायां प्रतेश्च ६। १। १४१

---

षत्वमिति वेति च वर्तते तदाह–षत्वं वा स्यादिति। 'षदॢ विशरणगत्यवसादनेषु'। विशरणं च गतिश्चाऽवसादनं च विशरणगत्यवसादनानि तेषु। विशरणमवयवानां विभागः, गतिर्गमनम्, अवसादनं नाशः। 'शदॢ शातने'। शातनं विशीर्णता। "शदेः शितः"। 'तङानावात्मनेपदम्" इत्यतस्तङानावित्यनुवर्ततेऽत आह––शिद्भाविनोऽस्मात्तङानाविति। "ऋत इद्धातोः"। अङ्गस्येत्यधिक्रियते। धातोरिति विशेष्यम् ऋत इति विशेषणम्, "येन विधि"रिति तदन्तविधिस्तदाह—ऋदन्तस्य धातोरङ्गस्येति। "किरतौ लवने"। "उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च" इत्यत उपादित्यनुवर्तते सुडिति च तदाह–उपात्किरतेः सुट् स्यादिति। "अड्भ्यासव्यवायेऽपि"। अट् च अभ्यासश्च अड्भ्यासौ ताभ्यां व्यवायस्तस्मिन्। "हिंसायां प्रतेश्च"। अत्र चकारात्

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ निगरणे ॥ ४० ॥

### अचि विभाषा ८ । २ । २१

गिरते रेफस्य लत्वं वा स्यादजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरिता, गरीता । गलिता, गलीता । प्रच्छ ज्ञीप्सायाम् ॥ ४१ ॥ "ग्रहिज्या" इति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । मृङ् प्राणत्यागे ॥ ४२ ॥

### म्रियतेर्लुङ्लिङोश्च १ । ३ । ६१

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते । ममार । मर्ता । मरिष्यति । मृषीष्ट । अमृत । पृङ् व्यायामे ॥ ४३ ॥ प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । जुषी प्रीतिसेवनयोः ॥ ४४ ॥ जुषते । जुजुषे । ओविजी भयचलनयोः ॥ ४५ ॥ प्रायेण उत्पूर्वः । उद्विजते ॥

### विज इट् १ । २ । २

विजेः पर इडादिप्रत्ययो ङिद्वत् स्यात् । उद्विजिता ।

इति तुदादयः ।

---

## अथ रुधादयः ।

रुधिर् आवरणे ॥ १ ॥

### रुधादिभ्यः श्नम् ३ । १ । ७८

---

लवने इत्यंशरहितम् "उपात्किरतौ" इति सूत्रं सम्बध्यते तदाह—उपात्प्रतेश्च किरतेरिति । "अचि विभाषा" । "कृपो रो लः" इत्यतो रो ल इति, "ग्रो यङि" इत्यतो ग्र इति च वर्तते तदाह—गिरते रेफस्य लत्वमिति । 'प्रच्छ, ज्ञीप्सायाम्' । ज्ञप्तुमिच्छा ज्ञीप्सा तस्याम् । ज्ञानेच्छेति तदर्थः "म्रियतेर्लुङ्लिङोश्च" । अत्र चकारात् "शदेः शितः" इति सूत्रात् शित इति सम्बध्यते तदाह-शितश्चेति । 'पृङ् व्यायामे' । व्यायामो दैर्घ्यम् । "विज इट्" । "गाङ्कुटादिभ्यो ञ्णिन्ङित्" इत्यतो ङितोऽनुवर्तनादाह—ङिद्वदिति । 'रुधिर्, आवरणे । आवरणमवरोधः । "रुधादिभ्यः, श्नम्" । श्नमः प्रत्य-

श्नोऽपवादः । रुणद्धि । 'श्नसोरल्लोपः" । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः ॥ रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध ।। रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुणत्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणत्, अरुणः । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत् । अरोत्स्यत ॥ भिदिर् विदारणे ॥ २ ॥ छिदिर् द्वैधीकरणे ॥ ३ ॥ युजिर् योगे ॥ ४ ॥ रिचिर् विरेचने ॥ ५ ॥ रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक् । अरिचत्, अरैक्षीत् । अरिक्त । विचिर् पृथग्भावे ॥ ६ ॥ विनक्ति । विङ्क्ते ॥ क्षुदिर सम्पेषणे ॥ ७ ॥ क्षुणत्ति । क्षुन्ते । क्षोत्ता अक्षुदत्, अक्षौत्सीत् । अक्षुत्त ॥ उच्छृदिर् दीप्तिदेवनयोः ॥ ८ ॥ छृणत्ति । छृन्ते । चच्छर्द । "सेऽसिचि" इति वेट् । चछृत्से, चछृदिषे । छर्दिता । छर्दिष्यति, छर्त्स्यति । अछृदत्, अच्छर्दीत् । अच्छर्दिष्ट । उतृदिर् हिंसानादरयोः ॥९॥ तृणत्ति । तृन्ते । कृती वेष्टने ॥१०॥ कृणत्ति । तृह हिसि हिंसायाम् ॥१२॥

## तृणह इम् ७ । ३ । ९२

तृहः श्नमि कृते इमागमः स्यात् हलादौ पिति। तृणेढि । तृण्ढः। ततर्ह । तर्हिता । अतृणेट् ॥

## श्नान्नलोपः ६ । ४ । २३

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥

## तिप्यनस्तेः ८ । २ । ७३

---

श्नवेऽपि मित्वादन्त्यादचः परत्वेन विधानम् । न च श्नमोऽन्त्यादचः परत्वेन विधाने प्रत्ययसंज्ञा व्यर्थेति वाच्यम् ? शकारस्येत्संज्ञासम्पादनार्थमुक्तसंज्ञाया आवश्यकत्वात् । 'भिदिर् विदारणे' । विदारणं भेदनम् । 'रिचिर् विरेचने' । विरेचनं निःसारणम् । 'क्षुदिर् सम्पेषणे' । सम्पेषणं संचूर्णनम् । "तृणह इम्" । "नाभ्यस्तस्याचि पिति" इत्यतः पितीति "उतो वृद्धिः" इत्यतो हलीति च वर्तते ततस्तदाविधिस्तदाह—हलादौ पितीति । "तिप्यनस्तेः" । "पदस्य" इत्यधिक्रियते । "ससजुषोः" इत्यतः स इति वर्तते । "वसुस्रंसु" इत्यतो द इति च विशेष-

पदान्तस्य सस्य दः स्यात्तिपि नत्वस्तेः । "ससजुषो रुः" इत्यस्यापवादः । अहि
नेः, अहिनद् । अहिंस्ताम् । अहिंसन् ॥

## सिपि धातो रुर्वा ८ । २ । ७४

पदान्तस्य धातोःसस्य रुः स्याद्वा । पक्षे "झलां जशोऽन्ते" इति जश्त्वम् । अहिनः
अहिनत्, अहिनद् ॥ उन्दी क्लेदने ॥१३॥ उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार
औनत् । औन्ताम् । औन्दन् । औनः, औनत् । औनदम् ॥ अन्जू व्यक्तिम्रक्षणका
न्तिगतिषु ॥ १४ ॥ अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ
अञ्जिता, अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ॥

## अञ्जेः सिचि ७ । २ । ७१

अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । तञ्चू संकोचने ॥ १५ ॥ तनक्ति
तङ्क्ता, तञ्चिता । ओविजी भयचलनयोः ॥ १६ ॥ विनक्ति । विङ्क्तः । "विज इट्"
इति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । शिष्लृ विशेषणे ॥१७
शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । शे
ण्ढि । । शिण्ढि । शिनषाणि । अशिनट् । शिंष्यात् । शिष्यात् । अशिषत् । एवं पिष्
सञ्चूर्णने ॥ १८ ॥ भञ्जो आमर्दने ॥१९॥ श्नान्नलोपः ॥ भनक्ति । बभञ्जिथ, बभङ्
क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् । भुज पालनाभ्यवहारयोः ॥२०॥ भुनक्ति
भोक्ता । भोक्ष्यति । अभुनक् ॥

## भुजोऽनवने १ । ३ । ६६

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति । ञिइन्धी दीप्तौ
॥२१॥ इन्धे । इन्धाते । इन्धते । इन्त्से । इन्ध्वे । इन्धाञ्चक्रे । इन्धिता । इन्धाम्
इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः॥विद् विचारणे॥२२॥विन्ते । वेत्ता

इति रुधादयः ।

---

णेन पदस्येत्यनेन तदन्तविधिरतदाह-पदान्तस्य सस्य दःस्यादिति । "सि
पि धातोरुर्वा" । "तिप्यनस्तेः" इत्यतः पदान्तस्य सस्य द इति पदत्रयमनुवर्तते
तदाह—पदान्तस्य धातोरित्यादि । 'उन्दी क्लेदने' । क्लेदनमार्द्रीभावः
"अञ्जेः सिचि" । सिचीति सप्तम्यन्तं षष्ठ्या विपरिणम्यते । "इडत्यर्तिव्यय
तीनाम्" इत्यतो नित्यमिडिति वर्ततेऽत आह—अञ्जेः सिचो नित्यमिडिति
'भुज, पालनाभ्यवहारयोः' । पालनं च अभ्यवहारश्च पालनाभ्यवहारौ तयोः
पालनं रक्षणम् अभ्यवहारो भक्षणम् । "भुजोऽनवने" । "तङानावात्मनेपदम्"

# अथ तनादयः ।

तनु विस्तारे ॥ १ ॥

## तनादिकृञ्भ्य उः ३ । १ । ७९ ॥

तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । तनोति । तनुतः । ततान । तेने । तनितासि । तनितासे । तनिष्यति । तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत्, अतानीत् ॥

## तनादिभ्यस्तथासोः २ । ४ । ७९

तनादेः सिचो वा लुक् स्यात् तथासोः । अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत् । अतनिष्यत । षणु दाने ॥ २ ॥ सनोति । सनुते ।

## ये विभाषा ६ । ४ । ४३

जनसनखनामात्वं वा यादौ क्ङिति । सायात्, सन्यात् । असानीत्, असनीत् ॥

## जनसनखनां सञ्झलोः ६ । ४ । ४२

एषामकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति । असात, असनिष्ट । असाथाः, असनिष्ठाः । क्षणु हिंसायाम् ॥३॥ क्षणोति । क्षणुते । "ह्म्यन्त" इति न वृद्धिः ॥ अक्षणीत् । अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । क्षिणु च ॥४॥ उप्रत्यये लघूपधगुणः केषांचिन्मते न ॥ क्षिणोति, क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित, अक्षेणिष्ट । तृणु अदने ॥ ५ ॥ तृणोति, तर्णोति । तृणुते, तर्णुते ॥ डुकृञ् करणे ॥ ६ ॥ करोति ॥

## अत उत्सार्वधातुके ६ । ४ । ११०

उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । कुरुतः ॥

---

इत्यतस्तङानावित्यनुवर्तते तदाह—तङानौ स्त इति । "तनादिकृञ्भ्य उः" । तन् आदिर्येषां ते तनादयस्ते च कृञ् च तनादिकृञस्तेभ्यः । कृञोऽपि तनादित्वात्तत एव कृञोऽप्युप्रत्ययसिद्धौ पृथक् कृञ्ग्रहणं गणकार्यमनित्यमिति परिभाषाज्ञापकम् । "तनादिभ्यस्तथासोः" । तश्च थाश्चेत्यनयोरितरेतरद्वन्द्वस्तथासौ तयोः । "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इत्यतः सिचो लुक् इत्यनयोरनुवर्तनादाह—सिचो लुगिति । "ये विभाषा" । "जनसनखनां सञ्झलोः" इत्यतो जनसनखनामिति, "विड्वनोरनुनासिकस्य" इत्यत आदिति च वर्तते तदाह—जनसनखनामात्वमिति । उप्रत्यये लघूपधगुण इति । संज्ञापूर्वकविधेरनित्यत्वादिति भावः । "अत उत्सार्वधातुके" । "ये च" (?) इत्यतः कृञ उप्रत्ययस्य चानुवृत्तिस्तदाह—

## न भकुर्छुराम् ८।२।७९

भस्य कुर्छुरोश्चोपधाया न दीर्घः॥ कुर्वन्ति॥

## नित्यं करोतेः ६।४।१०८

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यात् म्वोः परयोः कुर्वः। कुर्मः। कुरुते। चकार। चक्रे। कर्ता। करिष्यति। करिष्यते। करोतु। कुरुताम्। अकरोत्। अकुरुत॥

## ये च ६।४।१०९

कृञ उलोपः स्यात् यादौ प्रत्यये परे। कुर्यात्। कुर्वीत। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकरिष्यत्। अकरिष्यत।

## सम्परिभ्यां करोतौ भूषणे ६।१।१३७

## समवाये च ६।१।१३८

सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे सङ्घाते चार्थे॥ संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् "संस्कृतं भक्षाः" इति ज्ञापकात्॥

## उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९

उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते। वु

---

उप्रत्ययान्तस्य कृञोऽकारस्येति। "न भकुर्छुराम्"। भं च कुर् च छुर् च भकुर्छुरस्तेषाम्। "र्वोरुपधाया दीर्घ इकः" इत्यत उपधादीर्घपदयोरनुवर्तनादाह भस्य कुर्छुरोश्चेति। "नित्यं करोतेः"। "उतश्च प्रत्ययादसंयोगपूर्वात्" इत्यतः षष्ठ्यन्ततया विपरिणतस्य प्रत्ययादित्यस्यानुवृत्तिः "लोपश्चास्यान्यतरस्यां म्वोः" इत्यतो लोप इत्यस्य चानुवृत्तिस्तदाह–करोतेः प्रत्ययोकारस्य नित्यं लोप इति। "ये च"। "नित्यं करोतेः" इत्यतः करोतेः प्रत्ययोकारस्येत्यस्य चानुवृत्तिस्तदाह–कृञ उलोप इति। "सम्परिभ्यां करोतौ भूषणे"। "सुट्कात्पूर्वः" इत्यतः सुडिति वर्तते तदाह–सुट् स्यादिति। "उपात्प्रतियत्न"। "सुट् कात्पूर्वः" इत्यतः सुडिति "सम्परिभ्यां करोतौ" इत्यतः करोताविति च वर्तते तदाह–उपात्कृञः सुट् स्यादिति।

याचने ॥ ७ ॥ वनुते । ववने । मनु अवबोधने ॥ ८ ॥ मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमनिष्ट । अमनिष्यत ॥

इति तनादयः ।

# अथ क्र्यादयः ।

डुक्रीञ् द्रव्यविनिमये ॥ १ ॥

## क्र्यादिभ्यः श्ना ३ । १ । ८१

शपोऽपवादः ॥ क्रीणाति । "ई हल्यघोः" क्रीणीतः। "श्नाभ्यस्तयोरातः"। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः।क्रीणीते।क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रेथ, चिक्रयिथ। चिक्रिये। क्रेता। क्रेष्यति। क्रेष्यते। क्रीणातु, क्रीणीतात्। क्रीणीताम्। अक्रीणात्। अक्रीणीत। क्रीणीयात्। क्रीणीत। क्रीयात्। क्रेषीष्ट। अक्रैषीत्। अक्रेष्ट। अक्रेष्यत्। अक्रेष्यत। प्रीञ् तर्पणे कान्तौ च ॥ २ ॥ प्रीणाति। प्रीणीते। श्रीञ् पाके ॥ ३ ॥ श्रीणाति। श्रीणीते। मीञ् हिंसायाम् ॥ ४ ॥

## हिनुमीना ८ । ४ । १५

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात्॥ प्रमीणाति॥ प्रमीणीते। "मीनाति" इत्यात्वम्। ममौ। मिम्यतुः। ममिथ, ममाथ। मिम्ये। माता। मास्यति। मीयात्। मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त। षिञ् बन्धने॥ ५ ॥ सिनाति। सिनीते। सिषाय। सिष्ये। सेता। स्कुञ् आप्लवने॥ ६ ॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ३ । १ । ८२

चात् श्ना। स्कुनोति, स्कुनाति। स्कुनुते, स्कुनीते। चुस्काव। चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। स्तम्भ्वादयश्चत्वारः सौत्राः सर्वे रोधनार्थाः परस्मैपदिनः॥

## हलः श्नः शानज्झौ ३ । १ । ८३

---

'मनु, अवबोधने'। अवबोधनं ज्ञानम्। 'डुक्रीञ्, द्रव्यविनिमये'। द्रव्यस्य विनिमयो द्रव्यविनिमयस्तस्मिन्। विनिमयः प्रत्यर्पणम्। शपोऽपवाद इति। अत्रत्याभिप्रायः पूर्वोक्तरीत्यैवावसेयः। "हिनुमीना"। "उपसर्गादसमासेऽपि णोपदेशस्य" इत्यत उपसर्गादिति वर्तते। "रषाभ्यां नो णः समानपदे" इत्यतो ण इति च, तदाह—उपसर्गस्थान्निमित्तात्परस्येति। "स्तम्भु स्तुम्भु"। "क्र्यादिभ्यः श्ना" इत्यतः श्नेति वर्तते तदाह—चात् श्नेति। "हलः श्नःशानच्"।

हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ॥

**जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८**

च्लेरङ् वा स्यात् ॥

**स्तन्भेः ८ । ३ । ६७**

स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् । युञ् बन्धने ॥ ७ ॥ युनाति । युनीते । योता । क्नूञ् शब्दे ॥ ८ ॥ क्नूनाति । क्नूनीते । क्नविता ॥ द्रूञ् हिंसायाम् ॥ ९ ॥ द्रूणाति । द्रूणीते । दॄञ् विदारणे ॥ १० ॥ दृणाति । दृणीते । पूञ् पवने ॥ ११ ॥

**प्वादीनां ह्रस्वः ७ । ३ । ८०**

पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ऋ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः शिति ह्रस्वः स्यात् । पुनाति । पुनीते । पविता । लूञ् छेदने ॥१२॥ लुनाति । लुनीते । स्तॄञ् आच्छादने ॥ १३ ॥ स्तृणाति । "शर्पूर्वाः खयः" तस्तार । तस्तरतुः । तस्तरे । स्तरिता, स्तरीता । स्तृणीयात् । स्तृणीत । स्तीर्यात् ॥

**लिङ्सिचोरात्मनेपदेषु ७ । २ । ४२**

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि ॥

**न लिङि ७ । २ । ३९**

---

अत्र श्न इति श्नाशब्दस्य षष्ठ्येकवचन रूपम् । "आतो धातोः" इत्यत्र "आतः" इति योगविभागादधातोरप्याकारलोपः । स्तभानेति । अत्र सन्निपातपरिभाषया हेर्लुगभावो नाशङ्क्यः । "अतो हेः" इत्यारम्भसामर्थ्यादुक्तपरिभाषाया अप्रवृत्तेः । अत एव जहीत्यत्र जत्वस्याऽसिद्धत्वाद्धेर्लुग्वारितो न तु सन्निपातपरिभाषयेति भावः । "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुश्विभ्यश्च" । "च्लेः सिच्" इत्यतश्च्लेरिति, "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यतोऽङिति, "इरितो वा" इत्यतो वेति च वर्तते तदाह—च्लेरङ् वेति । "स्तन्भेः" । "सहेः साडः सः" इत्यतः स इति "अपदान्तस्य मूर्धन्य" इत्यतो मूर्धन्य इति चानुवर्तते तदाह—स्तन्भेः सौत्रस्य सस्य षः स्यादिति । "प्वादीनां ह्रस्वः" । अत्र "ष्ठिवुक्लमुचमां शिती"त्यतः शितीति वर्तते तदाह—शिति ह्रस्वः स्यादिति । "लिङ्सिचोरात्मनेपदेषु" । अत्र "वृतो वा" इत्यतो वृत इति, "इट् सनि वा," इत्यत इट् वेति च वर्तते । वृत इत्यत्र वृं ऋदिति छेदस्तत्र वृं इति निरनुबन्धकग्रहणात् वृङ्वृञोर्ग्रहणन्तदाह—वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वेति । "न लिङि" । अत्र

वृत इटो लिङि न दीर्घः । स्तरिषीष्ट । "उश्च" इति कित्त्वम् । स्तीर्षीष्ट । "सिचि च परस्मैपदेषु" । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरिष्ट, अस्तीर्ष्ट । कॄञ् हिंसायाम् ॥१४॥ कृणाति । कृणीते । चकार । चकरे । वृञ् वरणे ॥१५॥ वृणाति । वृणीते । ववार । ववरे । वरिता, वरीता । "उदोष्ठ्य" इत्युत्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । धूञ् कम्पने ॥१६॥ धुनाति । धुनीते । धोता, धविता । अधावीत् । अधविष्ट, अधोष्ट । ग्रह उपादाने ॥१७॥ गृह्णाति । गृह्णीते । जग्राह । जगृहे ॥

## ग्रहोऽलिटि दीर्घः ७ । २ । ३७

एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यात् न तु लिटि । ग्रहीता । गृह्णातु । "हलः श्नः शानज्झौ" । इति श्नः शानजादेशः । गृहाण । गृह्णात् । ग्रहिषीष्ट । "ह्मयन्त" इति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । कुष निष्कर्षे ॥ १८ ॥ कुष्णाति । कोषिता ॥ अश भोजने ॥ १९ ॥ अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । मुष स्तेये ॥ २० ॥ मोषिता । मुषाण । ज्ञा अवबोधने ॥ २१ ॥ जज्ञौ । वृङ् सम्भक्तौ ॥ २२ ॥ वृणीते । ववृषे । ववृढ्वे । वरिता, वरीता । अवरिष्ट, अवरीष्ट, अवृत ॥

इति क्र्यादयः ।

---

# अथ चुरादयः ।

चुर स्तेये ॥ १ ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३ । १ । २५

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे तेषामिह

---

"वृतो वा" इत्यतो वृत इति "ग्रहोऽलिटि" इत्यतो दीर्घ इति इडिति च वर्तते तदाह– वृत इटो लिङि न दीर्घ इति । "ग्रहोऽलिटि दीर्घः" । "एकाच उपदेशेऽनुदात्तात्" इत्यत एकाच इति इडिति च वर्तते तदाह–एकाचो ग्रहेरिति । 'कुष निष्कर्षे' । निष्कर्षो निष्कोषणं तदन्तर्गतस्य बाहिर्निःसारणम् । 'मुष, स्तेये' । स्तेयश्चौरव्यापारः । 'ज्ञा, अवबोधने । अवबोधनं ज्ञानम् । 'वृङ् सम्भक्तौ' । सम्भक्तिः पूजा । 'चुर स्तेये । अदर्शपूर्वकपरधनादिग्रहणरूपश्चौरव्यापारः स्तेयशब्दार्थः । प्रातिपदिकाद्धात्वर्थे । "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति

ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । "पुगन्त" इति गुणः । "सनाद्यन्ता" इति धातुत्वम् । तिप्शबादि, गुणायादेशौ । चोरयति ॥

## णिचश्च १ । ३ । ७४

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । "णिश्री"ति चङ् । णौ चङ्" इति ह्रस्वः । "चङी"ति द्वित्वम् । "हलादिः शेषः" । "दीर्घो लघोः" इत्यभ्यासस्य दीर्घः । अचचुरत् । अचूचुरत । कथ वाक्यप्रबन्धे ॥ २ ॥ अल्लोपः ॥

## अचः परस्मिन्पूर्वविधौ १ । १ । ५७

अल्विध्यर्थमिदम् ॥ परनिमित्तोऽजादेशः स्थानिवत्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् । गण सङ्ख्याने ॥ ३ ॥ गणयति ॥

## ई च गणः ७ । ४ । ९७

गणयतेरभ्यासस्य ईत्स्याच्चङ् परे णौ । चादत् । अजीगणत्, अजगणत् ॥

इति चुरादयः ।

---

वार्तिकस्वरूपम् । प्रातिपदिकाद्धात्वर्थे बहुलं णिच् स्यात् इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुप्लोपयणादिलोपप्रस्थस्फाद्या आदेशास्तद्वृणावपि स्युरिति तदर्थः । **चुरादिभ्यस्तु स्वार्थे** । "सत्यापपाश" इति सूत्रविहितणिचोऽर्थानुक्तत्वाच्चुरादिभ्यः स्वार्थे णिज् भवति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायेन येषां प्रत्ययानामर्था अनिर्दिष्टाः सन्ति तेषां स्वार्थे विधानात् । "**णिचश्च**" । णिचः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । "अनुदात्तङित आत्मनेपदम्" इत्यत आत्मनेपदमिति वर्तते । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इत्यतः कर्त्रभिप्राये क्रियाफले इति च वर्तते तदाह—**णिजन्तादात्मनेपदं स्यादिति** । "**अचः परस्मिन्**" । 'अच' इति स्थानषष्ठी । 'परस्मिन्' इति निमित्ते सप्तमी । पूर्वविधावित्यत्र षष्ठीसमासः पूर्वस्य विधिः पूर्वविधिरिति । पूर्वशब्दः सावधिक इति तस्य अच एवावधित्वेन निर्णीतः । पूर्वसूत्रात् स्थानिवत् आदेश इति पदद्वयमनुवर्तते तदा मूलोक्तार्थः सम्पद्यते । "**ई च गणः**" "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येत्यनुवर्तते, "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यतश्चङ्परे णावित्यनुवर्तते, "अत्स्मृदृत्वर" इत्यतोऽदिति वर्तते अतः

# अथ ण्यन्तप्रक्रिया।

## स्वतन्त्रः कर्ता १।४।५४

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्॥

## तत्प्रयोजको हेतुश्च १।४।५५

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्॥

## हेतुमति च ३।१।२६

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति॥

## ओः पुयण्ज्यपरे ७।४।८०

सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः। अबीभवत्। ष्ठा गतिनिवृत्तौ॥

## अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ७।३।३६

---

आह—अभ्यासस्य इत्स्यादित्यादि। स्वतन्त्रः कर्ता"। "कारके" इत्यधिक्रियते कारकत्वं च क्रियाजनकत्वं तेन क्रियायामिति लभ्यते वक्ष्यमाणन्यायाद्विवक्षितार्थलाभस्तदाह—क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थ इति। स्वातन्त्र्यं च प्रकृतधात्वात्तव्यापाराश्रयत्वम्। कारिकास्वरूपं तु—'वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्। स्थाल्या पचत इत्येषा विवक्षा दृश्यते यतः'॥ "तत्प्रयोजको हेतुश्च"। प्रयोजयतीति प्रयोजकस्तस्य प्रयोजकस्तत्प्रयोजकः। तच्छब्दः पूर्वसूत्रस्थकर्तृपदपरामर्शकः, चशब्दश्च पूर्वसूत्रकृतकर्तृसंज्ञापरामर्शकः। इत्येतदुभयशब्दलब्धमर्थमाह—कर्तुः प्रयोजक इति। "हेतुमति च"। हेतुरस्त्यस्मिन्नसौ हेतुमान् तस्मिन्। हेतुच्छब्दोऽत्र दर्शितविग्रहद्वारा प्रयोजकव्यापारार्थकः। "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यतो धातोरिति वर्तते। "सत्यापपाशरूपवीणातूल" इति सूत्राण्णिजनुवर्तते। तदाह—प्रयोजकव्यापारे प्रेषणादावित्यादि। "ओः पुयण्ज्यपरे"। पुश्च यण् च ज् च एषां समाहारद्वन्द्वः पुयण्ज् तस्मिन्। अः परो यस्मात् सोऽपरस्तस्मिन्। "अङ्गस्य" इत्यधिक्रियते। "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येति वर्तते। "सन्यतः" इति सूत्रमनुवर्तते तदाह—सनिपरे यदङ्गमित्यादि। 'ष्ठा गतिनिवृत्तौ'। गतेर्निवृत्तिर्गतिनिवृत्ति·

स्थापयति ॥

### तिष्ठतेरित् ७ । ४ । ५

उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । घट चेष्टायाम् ॥

### मितां ह्रस्वः ६ । ४ । ९२

घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्यात् णौ । घटयति । ज्ञप ज्ञाने ज्ञापने च । ज्ञपयति । अजिज्ञपत् ॥

इति ण्यन्तप्रक्रिया ।

---

## अथ सन्नन्तप्रक्रिया ।

### धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७

इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । पठ व्यक्तायां वाचि ॥

### सन्यङोः ६ । १ । ९

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । "सन्यतः" । पठितुमिच्छति पिपठिषति । कर्मणः किम् ? गमनेनेच्छति । समानकर्तृकात्किम् ? शिष्याः पठन्त्वितीच्छति गुरुः । वाग्रहणाद्वाक्यमपि । "लुङसनोर्घस्लृ" ॥

---

स्तस्मिन् । स्थिरीभवनम् इत्यर्थः । "तिष्ठतेरित्" । "णौ चङ्युपधाया ह्रस्वः" इत्यत उपधायाः चङ्परे णाविति पदत्रयानुवृत्तिस्तदाह--उपधाया इदादेशः स्यादित्यादि । "मितां ह्रस्वः" । "दोषो णौ" इत्यतो णाविति "ऊदुपधाया गोहः" इत्यत उपधाया इति च वर्तते तदाह—उपधाया ह्रस्वः स्याण्णावि ति । "धातोः कर्मणः समानकर्तृकादिच्छायां वा" । "गुप्तिज्किद्भ्यः सन्" इत्यतः सनिति वर्तते । इच्छायां सनो विधानात्प्रत्यासत्त्या कर्मत्वं समानक र्तृत्वं च इषेरेवेत्यत आह—इषिकर्मण इषिणैककर्तृकाद्धातोरित्यादि । "सन्यङोः" । सन् च यङ् च सन्यङौ तयोः । षष्ठ्यन्तमिदम् । सन्यङाविति प्रत्ययौ ततस्तदन्तग्रहणम् । "लिटि धातोरनभ्यासस्य" इत्यतो धातोरनभ्यासस्येति च पदद्वयमनुवर्तते । "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" इति सूत्र द्वयं चानुवर्तते तदाह—सन्नन्तस्य यङन्तस्य चेत्यादि । समानक

**सः स्यार्धधातुके ७ । ४ । ४९**

सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । "एकाच" इति नेट् ॥

**अज्झनगमां सनि ६ । ४ । १६**

अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि ॥

**इको झल् १ । २ । ९**

इगन्ताज्झलादिः सन् कित् स्यात् । "ऋत इद्धातोः" कर्तुमिच्छति चिकीर्षति ॥

**सनि ग्रहगुहोश्च ७ । २ । १२**

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । बुभूषति ॥

इति सन्नन्ताः ।

—:०:—

## अथ यङन्तप्रक्रिया ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३ । १ । २२**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥

---

र्तृकात्किम् ? सूत्रे समानकर्तृकादित्यस्यानुपादाने विभिन्नकर्तृकादपि धातोः प्रत्ययापत्तिरतस्तदुपादानम् । शिष्याः पठन्त्वितीच्छति गुरुरित्यत्र पठधातुः शिष्यकर्तृकः 'इष्, धातुर्गुरुकर्तृकः विभिन्नकर्तृकत्वान्न भवतीति बोध्यम् । "सःस्यार्द्धधातुके" । "अच उपसर्गात्तः" इत्यतस्त इत्यनुवर्तते तदाह—सस्य तः स्यादिति । "अज्झनगमां सनि" । अच् हन् च गम् च एषामितरेतरद्वन्द्वः अज्झनगमस्तेषाम् । "ढ्रलोपे पूर्वस्य दीर्घोऽण" इत्यतो दीर्घ इत्यनुवर्तते । "अनुनासिकस्य क्विझलोः क्ङिति" इत्यतो झलीति वर्तते । अजिति गमंशेऽपि सम्बध्यते तदाह—अजन्तानामित्यादि । "इको झल्" । "रुदविदमुषग्रहिस्वपिप्रच्छः संश्च" इत्यतः सनिति वर्तते । "असंयोगाल्लिट् कित्" इत्यतः किदिति वर्तते तदाह—सन् कित्स्यादिति । "सनि ग्रहगुहोश्च । "श्र्युकः किति" इत्यत उगिति, "नेड् वशि कृति" इत्यतो न इति इडिति च वर्तते तदाह—उगन्ताच्च सन इण्नेति । "धातोरेकाचो हलादेः" । क्रियासमभिहारो हि पौनःपुन्यं तदाह-

## गुणो यङ्लुकोः ७ । ४ । ८२

अभ्यासस्य गुणः स्यात् यङि यङ्लुकि च परतः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट ॥

## नित्यं कौटिल्ये गतौ ३ । १ । २३

गत्यर्थात्कौटिल्य एव यङ् स्यात् न तु क्रियासमभिहारे ॥

## दीर्घोऽकितः ७ । ४ । ८३

अकितोऽभ्यासस्य दीर्घः स्यात् यङ्यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥

## यस्य हलः ६ । ४ । ४९

यस्येति सङ्घातग्रहणम् । हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । "आदेः परस्य" । "अतो लोपः" । वाव्रजाञ्चक्रे । वाव्रजिता ॥

## रीगृदुपधस्य च ७ । ४ । ९०

ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद् यङ्लुकोः । वरीवृत्यते । वरीवृताञ्चक्रे । वरीवृतिता ॥

## क्षुभ्नादिषु च ८ । ४ । ३९

---

पौनःपुन्य इति । "गुणो यङ्लुकोः" । यङ् च लुक् च यङ्लुकौ तयोः यङ्लुकोः। सप्तम्यन्तमिदम्। लुक् च प्रत्यासत्त्या यङ एव । "अत्र लोपोऽभ्यासस्य" इत्यतोऽभ्यासस्येति वर्तते तदाह—अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । "नित्यं कौटिल्ये गतौ" । कुटिलस्य भावः कौटिल्यं तस्मिन् । "धातोरेकाच" इत्यत एव यङ्सिद्धौ सूत्रमिदं नियमार्थं तदाह—गत्यर्थात् कौटिल्य एव यङ् स्यात् न तु क्रियासमभिहार इति । "दीर्घोऽकितः" । "अत्र लोपोऽभ्यासस्य" इति सूत्रादभ्यासस्येति वर्तते । "गुणो यङ्लुकोः" इत्यतो यङ्लुकोरिति च, तदाह—अकितोऽभ्यासस्य दीर्घः स्याद्यङ्यङ्लुकोरिति । "यस्य हलः" । "अतो लोप" इत्यतो लोप इत्यनुवर्तते । "आर्धधातुके" इत्यधिक्रियते तदाह—लोपः स्यादार्धधातुक इति । "रीगृदुपधस्य च" । ऋत् उपधा यस्य स ऋदुपधस्तस्य । "अत्र लोपोऽभ्यासस्य" "इति सूत्रादभ्यासस्येति, "गुणो यङ्लुकोः" इत्यतो यङ्लुकोरिति च वर्तते तदाह-अभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोरिति । "क्षुभ्नादिषु च" । "रषाभ्यां नो णः समानपदे" इत्यतो ण इति, "न भाभूपूकमिगमिप्यायीवेपाम्" इत्यतो नेति च वर्तते तदाह—

यपु णत्वं न स्यात् । नरीनृत्यते । जरीगृह्यते ।

इति यङन्तप्रक्रिया ।

# अथ यङ्लुगन्तप्रक्रिया ।

## यङोऽचि च २ । ४ । ७४

यङोऽचि प्रत्यये लुक् स्याच्चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वमभ्यासकार्यम् । धातुत्वाल्लडादयः । "शेषात्कर्तरि" इति परस्मैपदम् । 'चर्करीतं च' इत्यदादौ पाठाच्छपो लुक् ॥

## यङो वा ७ । ३ । ९४

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । "भूसुवोः" इति गुणनिषेधो यङ्लुकि भाषायां न । "बोभूतु तेतिक्ते" इति च्छन्दसि निपातनात् । बोभवीति, बोभोति । बोभूतः । "अदभ्यस्तात्" । बोभुवति । बोभवाञ्चकार, बोभवामास । बोभविता । बोभविष्यति । बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवन्तु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । "गातिस्था" इति सिचो लुक् । "यङो वा" इतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् लुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥

इति यङ्लुगन्ताः ।

# अथ नामधातवः ।

## सुप आत्मनः क्यच् ३ । १ । ८

---

पपु णत्वं नेति । "यङोऽचि च" । "ण्यक्षत्रियार्षञितो लुगन्यतरस्याम्" इत्यतो लुगनुवर्तते तदाह—यङोऽचि प्रत्यये लुक् स्यादिति । "यङो वा" । "नाभ्यस्तस्याचि पिति सार्वधातुके" इत्यतः पिति सार्वधातुके इति पदद्वयानुवृत्तिः । "उतो वृद्धिर्लुकि हलि" इत्यतो हलीत्यस्य चानुवृत्तिः त्रयाणामनुवृत्तानां षष्ठ्यन्ततया विपरिणामः हलीत्यत्र तदादिविधिश्च । "ब्रुव ईट्" इत्यत ईडिति वर्तते । यङः सत्त्वेन यङन्तात्परस्य हलादेः पितोऽसम्भवात् सामर्थ्यात् यङ्पदं यङ्लुगन्तपरं तदाह—यङ्लुगन्तात्परस्येत्यादि । "सुप आत्मनः क्यच्" । "धातोः कर्मणः समानकर्तृका-

इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥

## सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

एतयोरवयवस्य सुपो लुक् स्यात् ॥

## क्यचि च ७ । ४ । ३३

अवर्णस्य ईत्स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति ॥

## नः क्ये १ । ४ । १५

क्यचि क्यङि च नान्तमेव पदं स्यात् नान्यत् । नलोपः । राजीयति । नान्तमेवेति किम् ? वाच्यति । "हलि च" । गीर्यति । पूर्यति । 'धातोरित्येव' नेह—दिवमिच्छति दिव्यति ॥

## क्यस्य विभाषा ६ । ४ । ५०

हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके । "आदेः परस्य" । "अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ॥

## काम्यच्च ३ । १ । ९

उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥

---

दिच्छायाम्" इत्यतः कर्मण इच्छायां वेत्यनुवर्तते । तथा च—सामीप्यादिच्छाकर्मण एव सम्भवस्तदाह—इषिकर्मण इति । सूत्रस्थ आत्मशब्दः स्वशब्दपर्यायस्तथाच कः स्वशब्देन गृह्यत इति जिज्ञासोदयादिच्छायाः सन्निधापितत्वेन स्वशब्दोपादेय एषितैवेत्यत आह—एषितुस्सम्बन्धिन इति । "सुपो धातुप्रातिपदिकयोः" । धातुश्च प्रातिपदिकञ्च धातुप्रातिपदिके तयोः । षष्ठ्यन्तमिदम् अवयवत्वं हि तदर्थः । "ण्यक्षत्रियार्षञितो लुगन्यतरस्याम्" इत्यतो लुगनुवर्तते तदाह—एतयोरवयवस्य सुपो लुगिति । "क्यचि च" । "अस्य च्वौ" इत्यतोऽस्येति, "ई घ्राध्मोः" इत्यत ईति चानुवर्तते तदाह—अवर्णस्य ईत्स्यादिति । "नः क्ये" । सूत्रे क्य इति निरनुबन्धनिर्देशात्सामान्यतः क्यच्क्यङोर्ग्रहणमित्यत आह—क्यचि क्यङि चेति । अन्तर्वर्तिविभक्त्याश्रयणेन "सुप्तिङन्तम्" इति सूत्रेणैव पदत्वसिद्धावनेन पदत्वविधानं नियमार्थन्तदाह—नान्तमेवेति । नियमफलं दर्शयति—नान्यदिति । नलोप इति । पदसंज्ञायाः प्रयोजनमिदम् । "क्यस्य विभाषा" । "यस्य हलः" इत्यतो हल इति, "अतो लोपः" इत्यतो लोप इति आर्धधातुके इति चानुवर्तते तदाह—हलः परयोरित्यादि । तस्य स्थानिवत्त्वादिति । "अचः परस्मिन्" इति सूत्रेणेत्यर्थः । "काम्यच्च" । क्यं हि काम्यच् प्रत्ययः क्यचोविषय एव भवति तदाह—उक्तविषय इति ।

## उपमानादाचारे ३ । १ । १०

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् । (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) "अतो गुणे" । कृष्ण इव आचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥

## अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५

अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥

## कष्टाय क्रमणे ३ । १ । १३

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥

---

"उपमानादाचारे" । "धातोः कर्मणः समानकर्तृकादिच्छायाम्वा" इति सूत्रात्कर्मण इति, "सुप आत्मनः क्यच्" इत्यतः सुप इति चानुवर्तते तदाह–उपमानात्कर्मणः सुबन्तादिति । पुत्रीयति छात्रम् । अत्र पुत्रमिवाचरतीति विग्रहः । सुन्दरं पुत्रमिच्छतीति विग्रहे न क्यच्प्रत्ययः । पुत्रस्य सुन्दरे विशेषणतया साकाङ्क्षत्वेन सामर्थ्याभावात् । सूत्रेण सामर्थ्यवदुपमानत एव क्यचो विधानात् । "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" । "कर्तुः क्यङ् सलोपश्च" इत्यत्र "उपमानादाचारे" इत्यस्यानुवृत्तिः । तत्रत्यमेवेदं प्रकृतवार्तिकम् । वार्तिकेऽस्मिन् प्रातिपदिकसद्भावात्सुपोऽनुवृत्त्या सुबन्तात्क्यचोऽविहितत्वादन्तर्वर्तिविभक्त्यभावादसुबन्तत्वेनाऽपदत्वाच्च पदकार्यमित्यभिप्रायेणाऽपदान्तकार्यप्रदर्शनम् "अतो गुण" इति । सस्वौ । सस्व अ इति स्थितौ णलो णित्वात् "अचो ञ्णिति" इति वृद्धौ "आत औ णलः" इति णल औकारादेशे "वृद्धिरेचि" इति वृद्धौ रूपसिद्धिः । अतुसि "अतो लोपः" इति लोपेन पररूपबाधनात् अकारलोपे सस्वतुरित्यादि रूपाणि बोध्यानि । "अनुनासिकस्य क्विझलोः क्ङिति" । अनुनासिकस्येति विशेषणम् । "अङ्गस्य" इत्यधिकृत्य विशेष्यम् । "येन विधिः" इति तदन्तविधिः । "नोपधायाः" इति सूत्रादुपधाया इति वर्तते । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्राद्दीर्घ इति च तदाह–अनुनासिकान्तस्योपधाया दीर्घः स्यादिति । पथीनति । पन्था इवाचरतीति विग्रहः । अत्र शब्निमित्तको लघूपधगुणः प्राप्नोति परमन्तरङ्गत्वाद्दीर्घे कृते गुणो न भवति । "कष्टाय क्रमणे" । कष्टायेति लुप्तपञ्चमीकं चतुर्थ्यन्तानुकरणम् । "कर्तुः क्यङ्स-

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३ । १ । १७**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । 'तत्करोति तदाचष्टे' इति णिच् ( प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ) प्रातिपदिकाद्धात्वर्थे णिच् स्यात् । इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । इत्यलोपः । घटं करोत्याचष्टे घटयति ॥

इति नामधातवः ।

—:o:—

# अथ कण्ड्वादयः ।

**कण्ड्वादिभ्यो यक् ३ । १ । २७**

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति कण्डूयते इत्यादि ॥

इति कण्ड्वादयः ।

# अथात्मनेपदप्रक्रिया ।

**कर्तरि कर्मव्यतिहारे १ । ३ । १४**

---

लोपश्च" इत्यतः क्यङोऽनुवृत्तिस्तदाह-चतुर्थ्यन्तारकष्टशब्दादित्यादि । "शब्दवैरकलहाभ्र" । शब्दश्च वैरश्च कलहश्च कण्वं च मेघश्चैतेषामितरेतरद्वन्द्वः शब्दवैरकलहाभ्रकण्वमेघास्तेभ्यः "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इत्यतः कर्मपदानुवृत्तिः । विभक्तिविपरिणामः "कष्टाय क्रमणे" इत्यतः क्यङोऽनुवृत्तिस्तदाह-एभ्यः कर्मभ्यः करोत्यर्थे क्यङिति । "तत्करोति तदाचष्टे" । तत् करोति तत् आचष्टे इत्यर्थे कर्मणो णिच् स्यादिति तदर्थः । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' । इष्ठे इव इष्ठवत् सप्तम्यन्ताद्वतिस्तदाह इष्ठे यथेति । इष्ठनि प्रत्यये परे यथा प्रातिपदिकस्य पुंवद्भावादिकार्याणि भवन्ति तथा णावपीमानि कार्याणि स्युरिति तदर्थः । "कण्ड्वादिभ्यो यक् । कण्डू आदिर्येषां ते कण्ड्वादयस्तेभ्यः । "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यतो धातोरित्यनुवर्तते, वचनविपरिणामश्च तदाह-एभ्यो धातुभ्य इति । "कर्तरि कर्मव्यतिहारे" । व्यतिहरणं व्यति-

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥

## न गतिहिंसार्थेभ्यः १ । ३ । १५

व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥

## नेर्विशः १ । ३ । १७

निविशते ।

## परिव्यवेभ्यः क्रियः १ । ३ । १८

परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥

## विपराभ्यां जेः १ । ३ । १९

विजयते । पराजयते ॥

## समवप्रविभ्यः स्थः १ । ३ । २२

सन्तिष्ठते । अवतिष्ठते । वितिष्ठते ॥

## अपह्नवे ज्ञः १ । ३ । ४४

शतमपजानीते । अपलपतीत्यर्थः ॥

## अकर्मकाच्च १ । ३ । ४५

सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥

---

हारः कर्मणो व्यतिहारः कर्मव्यतिहारस्तस्मिन् । कर्मव्यतिहारश्च क्रियाविनिमयः । "अनुदात्तङित आत्मनेपदम्" इत्यत आत्मनेपदानुवृत्तिस्तदाह—क्रियाविनिमये द्योत्य इति । "न गतिहिंसार्थेभ्यः" गतिश्च हिंसा च अर्थौ येषां ते गतिहिंसार्थास्तेभ्यः । गत्यर्थात् हिंसार्थाच्च धातोः क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं न स्यादित्यर्थः । "नेर्विशः" । निपूर्वाद्विशतेः कर्तर्यात्मनेपदं स्यादिति तदर्थः । "परिव्यवेभ्यः क्रियः" । परि च वि च अव चैतेषामितरेतरद्वन्द्वः परिव्यवास्तेभ्यः । परि वि अवेतत्पूर्वकात् क्रीणातेरात्मनेपदं स्यात्कर्तरि इत्यर्थः । "विपराभ्यां जेः" । वि च परा च विपरा ताभ्याम् । विपरापूर्वकाज्जयतेः कर्तर्यात्मनेपदं स्यादिति तदर्थः । "समवप्रविभ्यः स्थः" । समश्च प्र च वि च समवप्रव्यस्तेभ्यः । एतत्त्रितयपूर्वकात्तिष्ठतेः कर्तर्यात्मनेपदं स्यादित्यर्थः । "अपन्हवे ज्ञः" । अपपूर्वाज्जानातेरात्मनेपदं स्यादपन्हवे इत्यर्थः । "अकर्मकाच्च" । अकर्मकाच्च जानातेरात्मनेपदं

## उदश्चरः सकर्मकात् १ । ३ । ५३

धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥

## समस्तृतीयायुक्तात् १ । ३ । ५४

रथेन सञ्चरते ॥

## दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्, तृतीया चेच्चतुर्थ्यर्थे । दास्या सं-यच्छते कामी ॥

## पूर्ववत्सनः १ । ३ । ६२

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते ॥

## हलन्ताच्च १ । २ । १०

इक्समीपाद्धलः परो झलादिः सन् कित् स्यात् । निविविक्षते ॥

## गन्धनावक्षेपणसेवनसाहसिक्यप्रति-
## यत्नप्रकथनोपयोगेषु कृञः १ । ३ । ३२

गन्धनं सूचनम् । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामु-त्कुरुते, भर्त्सयतीत्यर्थः । हरिमुपकुरुते । सेवत इत्यर्थः । परदारान्प्रकुरुते, तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । कथाः प्रकुरुते, प्रकथयतीत्यर्थः । शतं प्रकुरुते, धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति ।

---

स्यादित्यर्थः । "उदश्चरः सकर्मकात्" । सकर्मकादुत्पूर्वाच्चरतेरात्मनेपदं स्यादित्यर्थः । "समस्तृतीया" । तृतीयान्तेन युक्तात्सम्पूर्वकाच्चरतेरात्मनेपदं स्यादित्यर्थः । "दाणश्च सा" । "समस्तृतीयायुक्तात्" इति सम्पूर्णसूत्रमात्मनेपदमिति-तमनुवर्तते तदाह—सम्पूर्वादित्यादि । 'दास्या संयच्छते कामी' । अशि-ष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वक्तव्या इति वार्तिकेन दास्येत्यत्र अशिष्ट-व्यवहारे चतुर्थ्यर्थे तृतीया बोध्या । "पूर्ववत्सनः" । "अनुदात्तङितः" इत्यत आ-त्मनपदमनुवर्तते । पूर्वत्वं च सन एवोपस्थितत्वाद्ग्राह्यम् । 'हलन्ताच्च' । "इको झल्" इति सूत्रमनुवर्तते । "रुदविदमुष" इत्यतः सनिति वर्तते । "असंयोगाल्लिट् कित्" इत्यतः किदिति च तदाह—इक्समीपाद्धलः पर इत्यादि । "गन्ध-नावक्षेपण" । "अनुदात्तङित आत्मनेपदम्" इत्यत आत्मनेपदमित्यनुवर्तते तद-

## भुजोऽनवने १ । ३ । ६६

ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥

इत्यात्मनेपदप्रक्रिया ॥

# अथ परस्मैपदप्रक्रिया ।

## अनुपराभ्यां कृञः १ । ३ । ७९

कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥

## अभिप्रत्यतिभ्यः क्षिपः १ । ३ । ८०

क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ॥

## प्राद्वहः १ । ३ । ८१

प्रवहति ॥

## परेर्मृषः १ । ३ । ८२

परिमृषति ॥

## व्याङ्परिभ्यो रमः १ । ३ । ८३

रमु क्रीडायाम् । विरमति ॥

## उपाच्च १ । ३ । ८४

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥

इति पदव्यवस्था ॥

---

चायमर्थः गन्धनादिष्वर्थेषु कृञ आत्मनेपदं स्यादित्यर्थः । "अनुपराभ्यां" । "शेषात्कर्तरि" इत्यतः परस्मैपदमित्यनुवर्तते । धातोर्भिन्त्वात्कर्तृगे फले गन्धनादौ चाप्राप्तं परस्मैपदमनेन विधीयते । "अभिप्रत्यतिभ्यः" । एतत्त्रितयपूर्वकात्क्षिपेः परस्मैपदं स्यादित्यर्थः । "प्राद्वहः" । प्रपूर्वकाद्वहतेः परस्मैपदं स्यादित्यर्थः । "परेर्मृषः" । परिपूर्वकान्मृषेः परस्मैपदं स्यादित्यर्थः । परिमृषति, अत्र भौवादिको 'मृष, तितिक्षायाम्' इति धातुः । "व्याङ्परिभ्यो" । वि आङ् परि एतत्त्रितयपूर्वकाद्रमेः परस्मैपदं स्यादित्यर्थः । "उपाच्च" । उपपूर्वकाद्रमेश्च परस्मैपदं स्यादित्य-

# अथ भावकर्मप्रक्रिया ।

## भावकर्मणोः १ । ३ । १३

लस्यात्मनेपदम् ॥

## सार्वधातुके यक् ३ । १ । ६७

भावकर्मवाचिनि धातोर्यक् स्यात् सार्वधातुके । भावः क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात् प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किन्त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६ । ४ । ६२

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयताम् । अभूयत । भाविषीष्ट, भविषीष्ट ।

## चिण् भावकर्मणोः ३ । १ । ६६

च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत, अभविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अ-

---

र्थः । "भावकर्मणोः" । लस्येत्यधिक्रियते । "अनुदात्तङित आत्मनेपदम्" इत्यनुवर्तते तदाह—लस्यात्मनेपदमिति । "सार्वधातुके यक्" । "धातोरेकाचो हलादेः" इत्यतो धातोरिति पूर्वसूत्रमनुवर्तते तदाह—धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिनीति । युष्मदस्मद्भ्यामिति । लकारो भाववाचको युष्मदस्मदौ च नेति ताभ्यां लकारस्य सामानाधिकरण्यं नास्तीति भावः । "स्यसिच्सीयुटतासिषु" । स्यश्च सिच्च सीयुट् च तासिश्च स्यसिच्सीयुट्तासयस्तेषु । भावश्च कर्म च भावकर्मणी तयोः । अच्च हन् च ग्रहश्च दृश्च अज्झनग्रहदृशस्तेषाम् । चिणीव चिण्वत् सप्तम्यन्ताद्वतिः । तदाह—चिणीवेति । अङ्गाधिकारबलादङ्गस्यैव कार्यस्यातिदेशादाह—आङ्गकार्यं वा स्यादिति । "चिण् भावकर्मणोः" । "च्लेः सिच्" इत्यतश्च्लेरिति, "चिण् ते पदः" इत्यतस्ते इति वर्तते । "भावकर्मणोः" इति षष्ठ्यन्तन्तदाह—च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे इति । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अकर्मकाणा

नुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामासे । चिण्वदिट्, भाविता । आभीयत्वेनासिद्धत्वाण्णिलोपः । भावयिता । भावयिषीष्ट । अभावि । अभाविषाताम्, अभावयिषाताम् । बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते । बोभूय्यते । बोभूयते । "अकृत्सार्वधातुकयोर्दीर्घः" स्तूयते विष्णुः । स्ताविता, स्तोता । स्ताविष्यते, स्तोष्यते । अस्तावि । अस्ताविषाताम्, अस्तोषाताम् । ऋ गतौ । "गुणोऽर्ति" इति गुणः । अर्यते । स्मृ स्मरणे । स्मर्यते । सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता, अर्ता । स्मारिता, स्मर्ता । "अनिदिताम्" इति नलोपः, स्रस्यते । इदितस्तु नन्द्यते । सम्प्रसारणम् । इज्यते ॥

## तनोतेर्यकि ६ । ४ । ४४

आकारान्तादेशो वा स्यात् । तायते, तन्यते ॥

## तपोऽनुतापे च ३ । १ । ६५

तपश्च्लेश्चिण् न स्यात्कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । "घुमास्था"इतीत्वम् । दीयते । धीयते । ददे ॥

## आतो युक् चिण्कृतोः ७ । ३ । ३३

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता, दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् । ग्लायते ॥

---

सकर्मकत्वासम्भवादयुक्तमिति नाशङ्क्यम् । सर्वेषां धातूनां फलसमानाधिकरणव्यापारवाचकत्वेन अकर्मकत्वम्, फलव्यधिकरणव्यापारवाचकत्वेन सकर्मकत्वमिति तदभिप्रायात् । भाव्यते । अकर्मकाणामपि णिजन्तधातूनां सकर्मकत्वादत्र कर्मणि प्रत्ययः । बुभूष्यते । अकर्मकाणामपि णिजन्तधातूनां सकर्मकत्वादत्र कर्मणि प्रत्ययः । बुभूष्यते । अकर्मकसन्नन्तधातूनामकर्मकत्वं सकर्मकसन्नन्तधातूनां सकर्मकत्वमिति नियमादस्य सन्नन्तभूधातोरकर्मकत्वाद्भावे प्रत्ययः । बोभूयते । यङ्यङ्लुकौ प्रकृतिवत्सकर्मकाकर्मकाविति नियमादत्र भावे प्रत्ययो बोध्यः । "तनोतेर्यकि । "विड्वनोरनुनासिकस्यात्" इत्यत आदिति "ये विभाषा" इत्यतो विभाषेति चानुवर्तते तदाह—आकारान्तादेशो वेति । "तपोऽनुतापे च । "च्लेः सिच्" इत्यतश्च्लेरिति वर्तते "चिण् ते पदः" इत्यतश्चिणिति "अत्र कर्मकर्तरि" इत्यतः कर्मकर्तरीति "न रुधः । इत्यतो नेति चेत्यत आह—तपश्च्लेश्चिण् न स्यादित्यादि । "आतो युक् चिण्कृतोः ॥ "अचो ञ्णिति" इत्यतो ञ्णि-

### भञ्जेश्च चिणि ६ । ४ । ३३

नलोपो वा स्यात् । अभाजि, अभञ्जि । लभ्यते ॥

### विभाषा चिणणमुलोः ७ । १ । ६९

लभेर्नुमागमो वा स्यात् । अलम्भि, अलाभि ॥

इति भावकर्मप्रक्रिया ॥

---

## अथ कर्मकर्तृप्रक्रिया ।

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः।

### कर्मवत्कर्मणा तुल्यक्रियः ३ । १ । ८७

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे भिद्यते काष्ठेन ।

इति कर्मकर्तृप्रक्रिया ॥

---

## अथ लकारार्थप्रक्रिया ।

### अभिज्ञावचने लृट् ३ । २ । ११२

---

तीति वर्तते तदाह--ङिणाति क्ङिति चेति । "भञ्जेश्च चिणि" । "श्नान्नलोपः" इत्यतो नलोप इति, "जान्तनशां विभाषा" इत्यतो विभाषेति च वर्तते तदाह--नलोपो वा स्यादिति । "विभाषा चिण्णमुलोः" । "लभेश्च" इत्यतो लभेरिति, "इदितो नुम् धातोः" इत्यतो नुमिति चानुवर्तते तदाह--लभेर्नुमागमो वा स्यादिति । द्विकर्मकधातुषु ल-कृत्य-क्त-खलर्थाः किं मुख्ये कर्मणि उत गौणे कर्मणि किं वोभयोरिति सन्देहे उच्यते—'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया' ॥ इति । "कर्मवत्कर्मणा" । सूत्रे कर्मशब्दो लक्षणया कर्मस्थक्रियाबोधकः । "कर्तरि शप्" इत्यतोऽनुवृत्तं कर्तरीतिपदं प्रथमया विपरिणम्यते स च प्रथमान्तो विशेष्यस्तदाह—कर्मस्थया क्रियया तुल्यक्रियः कर्तेति । "अभिज्ञावचने

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। लङोऽपवादः। वस निवासे। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादिप्रयोगेऽपि॥

## न यदि ३।२।११३

यद्योगे उक्तं न स्यात्। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि॥

## लट् स्मे ३।२।११८

लिटोऽपवादः। यजति स्म युधिष्ठिरः॥

## वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः। कदाऽऽगतोऽसि। अयमागच्छामि, अयमागमं वा। कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा॥

## हेतुहेतुमतोर्लिङ् ३।३ १५६

वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। भविष्यत्येवेष्यते। नेह हन्तीति पलायते। "विधिनिमन्त्रण" इति लिङ्। विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्। यजेत। निमन्त्रणं नियोगकरणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत। आमन्त्रणं कामचाराऽनुज्ञा। इहासीत। अधीष्टः सत्कारपूर्वको व्यापारः। पुत्रमध्यापयेद्भवान्। सम्प्रश्नः सम्प्रधारणम्। किं भो वेदमधीयीय उत तर्कम्। प्रार्थनं याच्ञा। भो भोजनं लभेय। एवं लोट्।

इति लकारार्थप्रक्रिया॥ इति तिङन्तम्॥

---

# अथ कृदन्तम्।

## धातोः ३।१।९१

---

लृट्"। अभिज्ञायते इत्यभिज्ञा स्मृतिः। तस्या वचनम् अभिज्ञावचनं तस्मिन्। "भूते" इत्यधिक्रियते, "अनद्यतने लङ्" इत्यतोऽनद्यतने इति वर्तते तदाह—स्मृतिबोधिन्युपपदे भूतानद्यतने इति। लङोऽपवादः। भूतानद्यतने लङो विधानात्तस्मिन्नेवास्यापि विधानेनैतद्विषयेऽपि लङः प्रवृत्त्या निरवकाशत्वादस्य लङो बाधकत्वमिति भावः। "न यदि"। पूर्वसूत्रात् लृटोऽनुवृत्तिस्तदाह उक्तमिति। लृङ्विधानमिति तदर्थः। "लट् स्मे"। "परोक्षे लिट्" इत्यतः परोक्ष इत्यनुवर्तते भूतेऽनद्यतने इति च। ततश्च स्मशब्दयोगे भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लट् स्यात् इति

आ तृतीयाध्यायसमाप्त्यन्तं ये प्रत्ययास्ते धातोः परे स्युः। "कृदतिङ्" इति कृत्संज्ञा॥

## वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४

अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥

## कृत्याः ३ । १ । ९५

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥

## कर्तरि कृत् ३ । ४ । ६७

कृत्प्रत्ययः कर्तरि स्यात् । इति प्राप्ते ॥

## तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७०

एते भावकर्मणोरेव स्युः ॥

## तव्यत्तव्यानीयरः ३ । १ । ९६

धातोरेते प्रत्ययाः स्युः । एधितव्यं, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वम् । चेतव्यश्चयनीयो वा धर्मस्त्वया । (केलिमर उपसङ्ख्यानम्) पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । कर्मणि प्रत्ययः॥

## कृत्यल्युटो बहुलम् ३ । ३ । ११३

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ।

स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ।

## अचो यत् ३ । १ । ९७

---

सूत्रस्यार्थः । "वाऽसरूपोऽस्त्रियाम्" । अपवाद इत्यधिकारात् असरूपोऽपवादो वेत्यर्थे फलितमाह—अस्मिन्धात्वधिकार इत्यादि । अस्त्रियामित्यस्य स्त्रियामधिकारोक्तप्रत्ययेन बाध्यबाधकभाव इत्यर्थः । "कृत्याः" । "ण्वुल्तृचौ" इत्यतो ण्वुल्तृचाविति वर्तते । (प्राक् ण्वुलः) इति वार्तिकाऽभिप्रायेणाह—ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युरिति । "तयोरेव कृत्यक्तखलर्थाः" । सूत्रे तच्छब्देन "लः कर्मणि च" इति सूत्रस्थयोः "कर्मणि भावे च" इत्यनयोः परामर्शादाह—एते भावकर्मणोरेवेति । "तव्यत्तव्यानीयरः" । तव्यच्च तव्यच्च अनीयर् चेत्येषामितरेतरद्वन्द्वः तव्यत्तव्यानीयरः । धातोरधिकारादाह—धातोरेते प्रत्ययाः स्युरिति । "अचो यत्" । धातोरित्यधिकृतस्य विशेषणस्य

अजन्ताद्धातोर्यत्। चेयम्॥

ईद्यति ६।४।६५

यति परे आत ईत्स्यात्। देयम्। ग्लेयम्।

पोरदुपधात् ३।१।९८

पवर्गान्तादुदुपधाद्यत् स्यात्। ण्यतोऽपवादः। शप्यम्। लभ्यम्।

एतिस्तुशास्वृदृजुषः क्यप् ३।१।१०९

एभ्यः क्यप् स्यात्॥

ह्रस्वस्य पिति कृति तुक् ६।१।७१

इत्यः। स्तुत्यः। शासु अनुशिष्टौ॥

शास इदङ्हलोः ६।४।३४

शास उपधाया इत्स्यादङि हलादौ क्ङिति। शिष्यः। वृत्यः। आदृत्यः। जुष्यः॥

मृजेर्विभाषा ३।१।११३

मृजेः क्यब्वा स्यात्। मृज्यः॥

ऋहलोर्ण्यत् ३।१।१२४

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात्। कार्यम्। हार्यम्। धार्यम्॥

चजोः कु घिण्ण्यतोः ७।३।५२

चजोः कुत्वं स्यात् घिति ण्यति च परे।

मृजेर्वृद्धिः ७।२।११४

---

सूत्रस्थस्याऽचश्चेति विशेषणस्य विशेष्यविशेषणभावात्तदन्तविधिस्तदाह—अजन्ताद्धातोरिति। "ईद्यति"। "आतो लोप इटि च" इत्यत आत इति वर्तते तदाह–आत ईत्स्यादिति। "ण्यतोऽपवादः"। अनुबन्धकृतसारूप्याभावस्यानङ्गीकारेण ण्यद्यतोः सारूप्याभावाद्वाऽसरूपेत्यस्याऽप्राप्त्या यतो ण्यद्बाधकत्वमित्यर्थः। "एति-स्तु"। 'इण् गतौ' 'ष्टुञ्, स्तुतौ' 'शासु, अनुशिष्टौ, 'वृञ्, वरणे' 'दृङ्, आदरे' 'जुषी, प्रीतिसेवनयोः। "शास इदङ्हलोः"। "अनिदितां हल उपधायाः" इत्यत उपधाया इत्यस्यानुवर्तनादाह–शास उपधाया इति। "मृज्यः"। मृजू, शुद्धौ'। "ऋहलोर्ण्यत्"। अत्र धातोरित्यधिकृतं पञ्चम्यन्तं विशेष्यमादाय सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणतस्य "ऋहलोः" इति षष्ठ्यन्तस्य विशेषणतया तदन्तविधिस्तदाह–ऋवर्णान्तादित्यादि। 'मृजेर्वृद्धिः'। "इको गुणवृद्धी"

मृजेरिको वृद्धिः स्यात् सार्वधातुकार्धधातुकयोः । मार्ग्यः ।

भोज्यं भक्ष्ये ७ । ३ । ६९

भोग्यमन्यत् ।

इति कृत्यप्रक्रिया ॥

ण्वुल्तृचौ ३ । १ । १३३

धातोरेतौ स्तः कर्तरि कृदिति कर्त्रर्थे ॥

युवोरनाकौ ७ । १ । १

युवु एतयोरनाकौ स्तः । कारकः । कर्ता ॥

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४

नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही । स्थायी । मन्त्री । पचादिराकृतिगणः ।

इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५

एभ्यः कः स्यात् । बुधः । कृशः । ज्ञः । प्रियः । किरः ॥

आतश्चोपसर्गे ३ । १ । १३६

प्रज्ञः । सुग्लः ॥

गेहे कः ३ । १ । १४४

गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ॥

कर्मण्यण् ३ । २ । १

कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् । कुम्भं करोति कुम्भकारः ॥

आतोऽनुपसर्गे कः ३ । २ । ३

---

इत्यत इक इति षष्ठ्यन्तपदोपस्थितिः । "सार्वधातुक" इत्यतः सार्वधातुकार्धधातुकयोरित्यनुवर्तते तदाह—मृजेरिको वृद्धिरिति । 'भोज्यं, भक्ष्ये' । 'भुज, पालनाभ्यवहारयोः' । नन्दन इति । 'टुनदि, समृद्धौ । जनशब्द उपपदः, 'अर्द गतौ याचने च । 'लूञ्, छेदने । 'ग्रह, उपादाने 'ष्ठा गति निवृत्तौ' 'मन्त्रि गुप्तपरिभाषणे'। 'डुपचष् पाके' इत्यादयः। "आतोऽनुपसर्गे कः" । धातोरित्यस्याधिकारः। "आत" इति 'अनुपसर्गे' इति च सूत्रे कर्मणि पूर्वसूत्रात्कर्मणीत्यस्यानुवृत्तिः । धातोरिति

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः। आतो लोपः। गोदः। धनदः। कम्बलदः। अनुपसर्गे किम्? गोसंदायः। "मूलविभुजादिभ्यः कः" मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्रः। कुध्रः।

## चरेष्टः ३।२।१६

अधिकरणे उपपदे। कुरुचरः॥

## भिक्षासेनादायेषु च ३।२।१७

भिक्षाचरः। सेनाचरः। आदायेति ल्यबन्तम्। आदायचरः।

## कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०

एषु द्योत्येषु करोतेष्टः स्यात्॥

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्व-नव्ययस्य ८।३।४६

आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः स्यात् करोत्यादिषु परेषु। यशस्करी विद्या। श्राद्धकरः। वचनकरः॥

## एजेः खश् ३।२।२८

ण्यन्तादेजेः खश् स्यात्॥

## अरुर्द्विषदजन्तस्य मुम् ६।३।६७

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते परे नत्वव्ययस्य। शित्त्वाच्छबादिः। जनमेजयतीति जनमेजयः॥

---

विशेष्यमादाय "आतः" इति विशेषणेन तदन्तविधिस्तदाह–आदन्ताद्धातोरित्यादि। "चरेष्टः"। "अधिकरणे शेतेः" इत्यतोऽधिकरणे इत्यनुवर्तते तदाह–अधिकरणे उपपदे इति। "भिक्षासेनादायेषु च"। भिक्षा च सेना च आदाय चैतेषामितरेतरद्वन्द्वः भिक्षासेनादायास्तेषु। "चरेष्टः" इत्यनुवर्तते भिक्षासेनाऽऽदाय पूर्वकाच्चरतेष्टः स्यादिति तदर्थः। "कृञो हेतुताच्छील्यानुलोम्येषु"। तच्छीलस्य भावस्ताच्छील्यम् अनुलोमस्य भाव आनुलोम्यं हेतुश्च ताच्छील्यं च आनुलोम्यं चेति हेतुताच्छील्यानुलोम्यानि तेषु। पूर्वसूत्रात् टस्यानुवृत्तेराह–एषु द्योत्येषु करोतेष्टः स्यादिति। "एजेः खश्"। व्याख्यानादेजेरिति ण्यन्तस्य ग्रहणादाह–ण्यन्तादेजेरिति। जनमेजयः। जनशब्दोपपदाण्ण्यन्तादेजेः खश्।

## प्रियवशे वदः खच् ३ । २ । ३८

प्रियंवदः । वशंवदः ॥

## अन्येभ्योऽपि दृश्यन्ते ३ । २ । ७५

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ।

## नेड् वशि कृति ७ । २ । ८

वशादेः कृत इण् न स्यात् । शॄ हिंसायाम् । सुशर्मा । प्रातरित्वा ॥

## विड्वनोरनुनासिकस्याऽऽत् ६ । ४ । ४१

अनुनासिकस्याऽऽत्स्यात् ॥ विजायत इति विजावा । ओणृ अपनयने अवावा ।
विच् । रुष रिष हिंसायाम् । रोट् । रेट् । सुगण् ॥

## क्विप् च ३ । २ । ७६

अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥

## सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८

अजात्यर्थे सुपि धातोर्णिनिः स्यात्, ताच्छील्ये द्योत्ये । उष्णभोजी ॥

## मनः ३ । २ । ८२

सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥

## आत्ममाने खश्च ३ । २ । ८३

स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ॥

## खित्यनव्ययस्य ६ । ३ । ६६

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । कालिंमन्या ॥

## करणे यजः ३ । २ । ८५

करणे उपपदे भूतार्थयजेर्णिनिः स्यात् कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥

---

प्रातरित्वा । प्रातर्शब्दोपपदात् 'इण् गतौ' इत्यस्मात् क्वनिप् । उष्णभोजी । उष्णं भोक्तुं शीलमस्य उष्णं भुङ्क्ते तच्छील इति वा विग्रहः । उष्णशब्दोपपदात् "भुज पालनाभ्यवहारयोः" इत्यतो णिनि । "मनः" । "सुप्यजातौ" इत्यतः सुपीत्यस्य णिनेश्चानुवृत्तिरित्याह—सुपि मन्यतेरिति । दर्शनीयमानी । द्रष्टुं योग्यं दर्शनीयम् तथाभूतमात्मानं मन्यते तच्छील इति विग्रहः । का-

## दृशेः क्वनिप् ३ । २ । ९४

कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥

## राजनि युधिकृञः ३ । २ । ९५

क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ॥

## सहे च ३ । २ । ९६

कर्मणीति निवृत्तम् । सह योधितवान् । सहयुध्वा सहकृत्वा ॥

## सप्तम्यां जनेर्डः ३ । २ । ९७

## तत्पुरुषे कृति बहुलम् ६ । ३ । १४

ङेरलुक् स्यात् । सरसिजम् , सरोजम् ॥

## उपसर्गे च संज्ञायाम् ३ । २ । ९९

'प्रजा स्यात्सन्ततौ जने' ॥

## क्तक्तवतू निष्ठा १ । १ । २६

एतौ निष्ठासंज्ञौ स्तः ॥

## निष्ठा ३ । २ । १०२

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । "तत्र तयोरेव" इति भावकर्मणोः क्तः । "कर्तरि कृत्" इति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८ । २ । ४२

रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ हिंसायाम् । ऋत इत् । रपरः । णत्वम् । शीर्णः । भिन्नः । छिन्नः ।

## संयोगादेरातो धातोर्यण्वतः ८ । २ । ४३

---

लिम्मन्या । आत्मानं कालीं मन्यते या सा कालिम्मन्या । "दृशेः क्वनिप्" । कर्मणि भूते दृशेः क्वनिप् स्यादिति तदर्थः । "राजनि युधि कृञः" । राजशब्दे उपपदे युध्यतेः कृञश्च क्वनिप् स्यादित्यर्थः । "सहे च" । सहशब्दोपपदादन्तर्भावितण्यर्थाद्युध्यतेः क्वनिप् स्यादित्यर्थः । "सप्तम्यां" । सप्तम्यन्ते उपपदे जन् धातोर्डः स्यादित्यर्थः । "निष्ठा" । भूते इत्यधिकारादाह—भूतार्थवृत्तेरिति । संयोगादेरिति । संयोग आदिर्यस्य स संयोगादिस्तस्मात् । यण् अस्यास्तीति यण्वान्

निष्ठातस्य नः स्यात् । द्राणः । ग्लानः ॥

**ल्वादिभ्यः ८ । २ । ४४**

एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या धातुः । "ग्रहिज्या" इति संप्रसारणम् ॥

**हलः ६ । ४ । २**

अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्य दीर्घः स्यात् । जीनः ॥

**ओदितश्च ८ । २ । ४५**

भुजो भुग्नः । टुओश्वि । उच्छूनः ॥

**शुषः कः ८ । २ । ५१**

निष्ठातस्य कः स्यात् । शुष्कः ॥

**पचो वः ८ । २ । ५२**

पक्वः । क्षै हर्षक्षये ।

**क्षायो मः ८ । २ । ५३**

क्षामः ॥

**निष्ठायां सेटि ६ । ४ । ५२**

णेर्लोपः । भावितः । भावितवान् । दृह हिंसायाम् ॥

**दृढः स्थूलबलयोः ७ । २ । २०**

स्थूले बलवति च निपात्यते ॥

**दधातेर्हिः ७ । ४ । ४२**

तादौ किति । हितम् ॥

**दो दद्घोः ७ । ४ । ४२**

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति । चर्त्वम् । दत्तः ।

---

तस्मात् यण्वतः । द्राणः । द्रा कुत्सायाम् । ग्लानः । ग्लै हर्षक्षये । "ओदितश्च" । ओत् इत् यस्य स ओदित् तस्मात् ओदितः । ओकारेत्संज्ञकाद्धातोः परस्य निष्ठातकारस्य नः स्यादित्यर्थः । "शुषः कः" । शुष् शोषणे । "पचो वः" । पच् धातोः परस्य निष्ठातकारस्य वः स्यादित्यर्थः । "क्षायो मः" । क्षै धातोः परस्य निष्ठातकारस्य मः स्यादित्यर्थः । "दधातेर्हिः" । "द्यतिस्यतिमास्थामित्ति किति" इत्यतस्तिकित्योरनुवर्तनादाह— तादौ कितीति । हितम् । डुधाञ् धारणपोषणयोः ।

**लिटः कानज्वा ३ । २ । १०६**

**क्वसुश्च ३ । २ । १०७**

लिटः कानच् क्वसुश्च वा स्तः । "तङानावात्मनेपदम्" । चक्राणः ।

**म्वोश्च ८ । २ । ६५**

मान्तस्य धातोर्नत्वं स्यात् म्वोः परतः । जगन्वान् ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य ॥

**आने मुक् ७ । २ । ८२**

अदन्ताङ्गस्य मुगागमः स्यादाने परे ॥ पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ॥

**विदेः शतुर्वसुः ७ । १ । ३६**

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन्, विद्वान् ॥

**तौ सत् ३ । २ । १२७**

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

**लृटः सद्वा ३ । ३ । १४**

व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यमाणं पश्य ॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३ । २ । १३४**

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥

**तृन् ३ । २ । १३५**

---

चक्राणः । डुकृञ् करणे । अस्माल्लिटः स्थाने कानच् "म्वोश्च" । अत्र "मो नो धातोः" इति सूत्रमनुवर्तते तदाह—मान्तस्य धातोर्नत्वमिति । "आने मुक्" । "अतो येयः" इत्यतोऽनुवृत्तमत इति पञ्चम्यन्तं षष्ठ्यन्ततया विपरिणम्यते तस्य चाधिकृताङ्गस्येत्यस्य विशेषणत्वात्तदन्तविधिस्तदाह—अदन्ताङ्गस्येति । तेनाऽप्रथमेति क्रमेणोदाहरणानि—पचन्तं चैत्रं पश्य । करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन् वसति । "आक्वेस्तच्छील" । अत्राङ्-शब्दोऽभिविध्यर्थकः । वक्ष्यमाणाः प्रत्यया इति शेषश्च तदाह—क्विपमभिव्याप्ये-

कर्ता कटान् ॥

**जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३ । २ । १५५**

**षः प्रत्ययस्य १ । ३ । ६**

प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥

**सनाशंसभिक्ष उः ३ । २ । १६८**

चिकीर्षुः । आशंसुः । भिक्षुः ॥

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तु-**
**वः क्विप् ३ । २ । १७७**

विभ्राट् । भाः ॥

**राल्लोपः ६ । ४ । २१**

रेफाच्छ्वोर्लोपः स्यात् क्वौ झलादौ क्ङिति । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् (क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च) वक्तीति वाक् ॥

---

स्यादि । कर्ता कटान् । अत्र कृयोगा षष्ठी नाशङ्कनीया "नलोकाव्ययनिष्ठा" इति तन्निषेधात् । "जल्पभिक्ष" । जल्पादीनां समाहारद्वन्द्वः । एभ्यो धातुभ्यः षाकन् प्रत्ययः स्यादित्यर्थः । जल्प व्यक्तायां वाचि । भिक्ष भिक्षायाम् । कुट्ट छेदनभर्त्सनयोः । लुण्ट स्तेये । वृङ् सम्भक्तौ । "षः प्रत्ययस्य" । आदिर्ञिटुडवः" इत्यत आदिरिति, "उपदेशेऽजनुनासिक इत्" इत्यत इदिति च वर्तते तदाह–प्रत्ययस्यादिरिति । "सनाशंस" । सन्नन्तादाशंसेर्भिक्षधातोश्च उः प्रत्ययः स्यादित्यर्थः । "भ्राजभास" । सूत्रे समाहारद्वन्द्वः । एभ्यः क्विप् स्यादित्यर्थः । भ्राजृ दीप्तौ । भास दीप्तौ । धुर्वी हिंसायाम् । द्युत दीप्तौ । ऊर्ज बलप्राणनयोः । पॄ पालनपूरणयोः । जु गतौ सौत्रः । ग्रावपूर्वः ष्टुञ् स्तुतौ । "राल्लोपः" । "छ्वोः शूडनुनासिके च" इत्यतश्छ्वोरिति, "अनुनासिकस्य क्विझलोः क्ङिति" इत्यतः क्वयादेरनुवृत्तिरत आह–रेफाच्छ्वोर्लोप इत्यादि । दृशिग्रहणस्यापकर्षादिति । "अन्येभ्योऽपि दृश्यते" इत्यतो "भ्राजभास" इतिसूत्रे दृशिग्रहणस्यापकर्षाद्विध्यन्तरोपसङ्ग्रहो भवति तदेव फलितमाह–जवतेर्दीर्घ इति । "क्विब्वचीति" । वच परिभाषणे । प्रच्छ ज्ञीप्सायाम् । आयतपूर्वः ष्टुञ् स्तुतौ । कटपूर्वः प्रुङ् गतौ । जु गतौ । श्रीञ् सेवा

## च्छ्वोः शूडनुनासिके च ६ । ४ । १९

सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् इत्यादेशौ स्तो अनुनासिके क्वौ झलादौ च क्ङिति । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जूस्तः । श्रयति हरिं श्रीः ॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३ । ३ । १८२

दावादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् । नेत्रम् ॥

## तितुत्रतथसिसुसरकसेषु च ७ । २ । ९

एषां दशानां कृत्प्रत्ययानामिण् न स्यात् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ॥

## अर्तिलूधूसूखनसहचर इत्रः ३ । २ । १८४

अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

## पुवः संज्ञायाम् ३ । २ । १८५

पवित्रम् ।

इति पूर्वकृदन्तम् ।

---

# अथोणादयः ।

"कृवापाजिमिस्वदिसाध्यशूभ्य उण्" । करोतीति कारुः । वातीति वायुः । पायु-

---

याम् । "च्छ्वोश्शूड" । "अनुनासिकस्य क्विझलोः क्ङिति" इत्यतः क्विझलोः क्ङितीति वर्तते तदाह—क्वावित्यादि । "दाम्नी" । धः कर्मणि ष्ट्रन् इत्यतः ष्ट्रनिति वर्तते तदाह—दावादेः ष्ट्रन् स्यादिति । दाप् लवने । णीञ् प्रापणे । शसु हिंसायाम् । यु मिश्रणामिश्रणयोः । युज समाधौ । ष्टुञ् स्तुतौ । तुद व्यथने । षिञ् बन्धने । षिच् क्षरणे । मिह सेचने । पत्लृ पतने । दंश दशने । णह बन्धने । "तितुत्रतथ" । "नेड् वशि कृति" इत्यतो न इड् कृतीति पदत्रयमनुवर्तते तदाह—कृत्प्रत्ययानामिण् नेति । दंष्ट्रा । षित्वान्ङीष् नाशङ्क्यः अजादिगणपाठसामर्थ्याट्टापो दुर्वारत्वात् । "अर्तिलूधूसूखनसहचर इत्रः" । ऋ गतौ । लूञ् छेदने । धू विधूनने । खनु अवदारणे । षह मर्षणे । चर गतिभक्षणयोः । एभ्यो धातुभ्य इत्रः प्रत्ययः स्यादित्यर्थः । "पुवः संज्ञायाम्" । पूञ् धातोः संज्ञायामित्रः प्रत्ययः स्यादित्यर्थः । कृवापाजिमिस्व-

हृन्नम् । जायुरौषधम् । मायुः पित्तम् । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् इत्युणादयः ।

# अथोत्तरकृदन्तम् ।

## उणादयो बहुलम् ३ । ३ । १

एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३ । ३ । १०

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ॥

## कालसमयवेलासु तुमुन् ३ । ३ । १६७

कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला वा भोक्तुम् ॥

## भावे ३ । ३ । १८

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः ॥

---

कृवापाजिमिस्वदिसाध्यशूभ्य उण्" । डुकृञ् करणे । वा गतिगन्धनयोः । पा रक्षणे । जि जये । डुमिञ् प्रक्षेपणे । स्वद आस्वादने । साध संसिद्धौ । अशूङ् व्याप्तौ । एभ्यो धातुभ्य उण् प्रत्ययः स्यादित्यर्थः । "उणादयो बहुलम्" । उण् आदिर्येषान्ते उणादयः । बहून् अर्थान् लातीति बहुलम् । "वर्तमाने लट्" इत्यतो वर्तमान इति, "पुंसि संज्ञायाम्" इत्यतः संज्ञायामिति चानुवर्तते तदाह–एते वर्तमाने संज्ञायां चेति । अपरिपूर्णानामुणादीनां परिपूरणार्थस्य बहुलग्रहणस्य फलमाह–केचिदविहिता अपीति । संज्ञास्विति । संज्ञासु अनादिसंज्ञासु न तु सर्वासु । धातुरूपाणि ऊह्यन्ते इति शेषः, यथा "हृशेरुलच्" इति विहितमुलच्प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते तेन शङ्कुलेति सिध्यति । कार्याद्विद्यादिति । क्ङिड इत्यादौ गुणप्रतिषेधादिकार्यानुरोधात् अनूबन्धं ककारादिकं विद्यादित्यर्थः । एतच्छास्त्रमुणादिषु एतत् सर्वमुणादिषु शास्त्रं शासितममित्यर्थः । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" । क्रियाऽर्थः प्रयोजनं यस्याःसा क्रियार्था तस्याम् । भविष्यति गम्यादयः" इत्यतो भविष्यतीत्यनुवर्तते तदाह–भविष्यत्यर्थे इति । "भावे" । "पदरुजविशस्पृशो घञ्" इत्यतो घञनुवर्तते तदाह–धातो

अकर्तरि च कारके संज्ञायाम् ३।३।१९

कर्तृभिन्ने कारके घञ् स्यात्॥

घञि च भावकरणयोः ६।४।२७

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः॥

निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१

एषु चिनोतेर्घञ् आदेश्च ककारः उपसमाधानं राशीकरणम्। निकायः। कायः। गोमयनिकायः।

एरच् ३।३।५६

इवर्णान्तादच् स्यात्। चयः। जयः॥

ऋदोरप् ३।३।५७

ऋवर्णान्तादुवर्णान्तादप् स्यात्। करः। गरः। यवः। लवः। स्तवः। पवः। घञर्थे कविधानम्। प्रस्थः। विघ्नः।

ड्वितः क्त्रिः ३।३।८८

क्त्रेर्मम् नित्यम् ४।४।२०

क्त्रिप्रत्ययान्तात् मप् निर्वृत्तेऽर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप्। उप्त्रिमम्।

ट्वितोऽथुच् ३।३।८९

टुवेपृ कम्पने। वेपथुः॥

---

घञ् स्यादिति। "घञि च भावकरणयोः"। भावश्च करणं च भावकरणे तयोः। "श्नान्नलोपः" इत्यतो नलोप इति, "रञ्जेश्च" इति सूत्रात् रञ्जेरिति च वर्तते तदाह-रञ्जेर्नलोप इति। "निवासचिति"। "हस्तादाने चेरस्तेये" इत्यतश्चेरिति "पदरुजविशस्पृशो घञ्" इत्यतो घञिति च वर्तते तदाह-एषु चिनोतेर्घञि-ति। "एरच्"। अधिकृतं धातोरिति पदं विशेष्यमादाय विशेषणेनेवर्णेन तदन्तविधिस्तदाह-इवर्णान्तादिति। "ऋदोरप्"। अधिकृतस्य धातोरित्यस्य विशेष्यत्वेन ऋवर्णोवर्णयोर्विशेषणत्वेन ताभ्यां तदन्तविधिस्तदाह—ऋवर्णान्तादुवर्णान्तादिति। प्रस्थः। घञर्थे कप्रत्ययस्य विधानात्कित्वात् "आतो लोप इटि च" इत्याकारलोपः। विघ्नः। अत्र कित्वात् "गमहन" इत्युपधालोपः "हो हन्तेः" इति कुत्वञ्च। "ड्वितः क्त्रिः"। ड्वनुबन्धकाद्धातोः भावे कर्तृभिन्ने कारके चार्थे क्त्रिः प्रत्ययः स्यादित्यर्थः। "ट्वितोऽथुच्"। ट्वनुबन्धकाद्धातोर्भावे कर्तृभिन्ने

## यजयाचयतविच्छप्रच्छरक्षो नङ् ३ । ३ । ९०

यज्ञः । याञ्चा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ॥

## स्वपो नन् ३ । ३ । ९१

स्वप्नः ॥

## उपसर्गे घोः किः ३ । ३ । ९२

प्रधिः । उपाधिः ॥

## स्त्रियां क्तिन् ३ । ३ । ९४

स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः ( ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ) तेन नत्वम् । कीर्णिः । लूनिः । धूनिः । पूनिः । ( सम्पदादिभ्यः क्विप् ) सम्पत् । विपत् । आपत् । क्तिन्नपीष्यते । सम्पत्तिः । विपत्तिः । आपत्तिः ॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३ । ३ । ९७

एते निपात्यन्ते ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ६ । ४ । २०

एषामुपधावकारयोरूठ् स्यादनुनासिके क्वौ झलादौ क्ङिति । अतः क्विप् । जूः । तूः । स्रूः । ऊः । मूः ॥

## इच्छा ३ । ३ । १०१

इषेर्निपातोऽयम् ॥

## अ प्रत्ययात् ३ । ३ । १०२

---

कारके चार्थेऽथुच् स्यादित्यर्थः । "यजयाचयत" । यज देवपूजासङ्गतिकरणदानेषु । टुयाचृ याच्ञायाम् । यती याचने च । विच्छ गतौ । प्रच्छ ज्ञीप्सायाम् । रक्ष पालने । एभ्यो धातुभ्यो नङ् प्रत्ययः स्यादित्यर्थः । "स्वपो नन्" । स्वप धातोर्नन् प्रत्ययः स्यादित्यर्थः। "उपसर्गे घोः किः"। सोपसर्गाद्घुसंज्ञकधातोः किः प्रत्ययः स्यादित्यर्थः । "ज्वरत्वर" । अनुनासिकस्य क्विझलोः क्ङिति" इत्यतः क्विझलोः क्ङितीति पदद्वयमनुवर्तते "छ्वोः शूडनुनासिके च" इत्यतो वकारस्य ऊठः अनुनासिक इत्यस्य चानुवृत्तिस्तदाह—एषामुपधावकारयोरूठिति । सम्पदादेराकृतिगणत्वादाह—अतः क्विबिति । "इच्छा" । कृञः श च" इत्यतः श इत्यनुवर्तते तदाह—इषेरिति । "अप्रत्ययात्" । अधिकृतं धातोरितिपदं विशेष्यमादाय विशेषणेन प्रत्ययादित्यनेन तदन्तविधिः । भावे स्त्रियामिति चानुवर्तते तदाह—

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥

**गुरोश्च हलः ३ । ३ । १०३**

गुरुमतो हलन्तात्स्त्रियामप्रत्ययः स्यात् । ईहा ॥

**ण्यासश्रन्थो युच् ३ । ३ । १०७**

अकारस्यापवादः । कारणा । हारणा ॥

**नपुंसके भावे क्तः ३ । ३ । ११४**

**ल्युट् च ३ । ३ । ११५**

हसितम् । हसनम् ॥

**पुंसि संज्ञायां घः प्रायेण ३ । ३ । ११८**

**छादेर्घेऽद्व्युपसर्गस्य ६ । ४ । ९६**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्यात् घे परे । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ।

**अवे तॄस्त्रोर्घञ् ३ । ३ । १२०**

अवतारः कूपादेः । अवस्तारो जवनिका ॥

**हलश्च ३ । ३ । १२१**

हलन्ताद्घञ् स्यात् । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ।

**ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२६**

"करणाधिकरणयोः" इति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् । "तयोरेव" इति भावे कर्मणि च । कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे ईषत्करः । सुकरः ॥

---

प्रत्ययान्तेभ्यो धातुभ्य इति । "गुरोश्च हलः" । पूर्वसूत्रात् भावे स्त्रियां अ इत्येतत्त्रितयस्य सम्बन्धस्तदाह—स्त्रियामप्रत्यय इति । "ण्यासश्रन्थ" । ण्यन्तादासेः श्रन्थेश्च युच् स्यात् भावे स्त्रियां च । 'येननाप्राप्तिन्यायेन अपवादोऽयमप्रत्ययस्येति बोध्यम् । "नपुंसके भावे क्तः" । कालसामान्ये नपुंसके भावे धातोः क्तः ल्युट् च स्यादित्यर्थः । "पुंसि संज्ञायाम्" । पुंस्त्वविशिष्टसंज्ञायामर्थे प्रायेण घः स्यादित्यर्थः । "अवे तॄस्त्रोर्घञ्" । अवोपसर्गात् तरतेः स्तृणातेश्च धातोर्घञ् स्यादित्यर्थः । "हलश्च" । अवे तॄस्त्रोर्घञित्यतो घञिति वर्तते । अधिकृतं धातोरिति पदं विशेष्यमादाय विशेषणेन हल इत्यनेन तदन्तविधिस्तदाह—हलन्तादिति । बहुलग्रह-

## आतो युच् ३ । ३ । १२८

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३ । ४ । १८

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचां ग्रहणं पूजार्थम् । "अमैवाव्ययेन" इति नियमान्नोपपदसमासः । "दो दद्घोः" । अलं दत्त्वा । "घुमास्था" इतीत्वम् । पीत्वा खलु । अलंखल्वोः किम् ? मा कार्षीत् । प्रतिषेधयोः किम् ? अलंकारः ।

## समानकर्तृकयोः पूर्वकाले ३ । ४ । २१

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति ।

## न क्त्वा सेट् १ । २ । १८

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ? कृत्वा ।

## रलो व्युपधाद्धलादेः संश्च १ । २ । २६

इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । व्युपधात्किम् ? वर्तित्वा । रलः किम् ? सेवित्वा । हलादेः किम् ? एषित्वा । सेट् किम् ? भुक्त्वा ॥

---

धातुवृत्त्याऽधिकरणे करणे चानेन घञ् विधीयते । "आतो युच्" । अधिकृतं धातोरिति पदं विशेष्यमादाय विशेषणेन तदन्तविधौ आदन्ताद्धातोर्युच् स्यादित्यर्थः । येन नाप्राप्तिन्यायेन खल्प्रत्ययस्य बाधकोऽयम् तदाह—खलोऽपवाद इति । "अलंखल्वोः" । प्राचां ग्रहणं पूजार्थमिति । अलं रुदित्वा अलं रोदनेनेति रूपद्वयसिद्धये विकल्पार्थमस्तु तदिति नाशङ्क्यम् । वासरूपन्यायेनैव विकल्पसिद्धेः । "समानकर्तृकयोः पूर्वकाले" । समानः कर्ता ययोस्तौ समानकर्तृकौ तयोः । एककर्तृकयोरित्यर्थः । तदाहरणं यथा भुक्त्वा व्रजति अत्र स इति कर्तारमध्याहरति, एक एव तच्छब्दवाच्यः कर्ता भोजनक्रियागमनक्रिययोरिति समानकर्तृकत्वं सुघटितम् । "न क्त्वा सेट्" । "असंयोगाल्लिट् कित्" इत्यतः किदिति वर्तते तदाह—किन्न स्यादिति । "रलो व्युपधाद्धलादेः संश्च" । इश्च उश्च वी ते उपधे यस्य स व्युपधस्तस्मात् । रलो धातुविशेषणतया तदन्तविधिः । "तृषिमृषिकृशेः काश्यपस्य" इत्यतः सेट् क्त्वा कित् वेति पदचतुष्टयमनुवर्तते तदाह—रलन्तात्परावित्यादि ।

### उदितो वा ७ । २ । ५६

उदितः परस्य क्त्व इड् वा स्यात् । शमित्वा, शान्त्वा । देवित्वा, द्यूत्वा । दधातेर्हिः । हित्वा ॥

### जहातेश्च क्त्वि ७ । ४ । ४३

हित्वा । हाङस्तु हात्वा ॥

### समासेऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? अकृत्वा ॥

### आभीक्ष्ण्ये णमुल् च ३ । ४ । २२

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥

### नित्यवीप्सयोः ८ । १ । ४

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु कृदन्तेषु । स्मारं स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा । पायं पायम् । भोजं भोजम् । श्रावं श्रावम् ।

### अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३ । ४ । २७

एषु कृञो णमुल् स्यात् । सिद्धोऽप्रयोगोऽस्य एवं भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवंकारम् । इत्थंकारं भुङ्क्ते । सिद्धेति किम् ? शिरोऽन्यथा कृत्वा भुङ्क्ते ॥

इत्युत्तरकृदन्तम् ।

इति कृदन्तप्रकरणम् ॥

---

## अथ विभक्त्यर्थाः ।

### प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६

---

"उदितो वा" । "तीषसहलुभरुषरिषः" इत्यत(?) इडेति वर्तते तदाह—इड् वेति । "जहातेश्च क्त्वि" । ओहाक् धातोः परस्य क्त्व इट् स्यादित्यर्थः । अथ विभक्त्यर्थाः । "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । पदं पदं प्रतिपदं प्रतिपदं भवं प्रातिपदिकं तस्यार्थः प्रातिपदिकार्थः स च लिङ्गं च परिमाणं

नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात् ॥ प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे—तटः । तटी । तटम् । परिमाणमात्रे । द्रोणो व्रीहिः । वचनं सङ्ख्या । एकः । द्वौ । बहवः ॥

## सम्बोधने च २ । ३ । ४७

प्रथमा स्यात् । हे राम ॥

इति प्रथमा ।

---

## कर्तुरीप्सिततमं कर्म १ । ४ । ४९

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ।

## कर्मणि द्वितीया २ । ३ । २

अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा । हरिः सेव्यते । लक्ष्म्या सेवितः ॥

## अकथितं च १ । ४ । ५१

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

---

च वचनं च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि तान्येवेति प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं तस्मिन् 'द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणपदं प्रत्येकमभिसम्बध्यते' इति भाष्योक्त्या द्वन्द्वान्ते श्रूयमाणमात्रपदस्य प्रत्येकमन्वयात्प्रातिपदिकार्थमात्र इत्याद्यर्थः सम्पद्यते । **नियतोपस्थितिक इति** । नियता व्यापिका उपस्थितिर्यस्य स नियतोपस्थितिकः । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः । **परिमाणमात्रे द्रोणो व्रीहिः** । द्रोणो व्रीहिरित्यत्र द्रोणशब्दात्प्रातिपदिकार्थमात्रे प्रथमाविधानेऽभेदान्वयो दुर्वारः स्यात् । सचात्र बाधितः स्यात् । द्रोणव्रीह्योर्भिन्नत्वादतः परिमाणमात्रे प्रथमाविधानम् । **वचनं संख्या** । एकादिशब्दादेवैकत्वादिसंख्याबोधसिद्धौ तदर्थं संख्यायामेकवचनादिविधानं विफलमिति पूर्वपक्षः, अनन्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तिर्न्याय्येति वचनादेकवचनादि विधानमिति समाधिः । **अभिहिते तु कर्मादौ प्रथमा** । अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ् हरिः सेव्यते । कृत् लक्ष्म्या सेवितः । तद्धितः शतेन क्रीतः शत्यः । समासः प्राप्त आनन्दो यं स प्राप्तानन्दः । **"अकथितं च"** । अत्र



"दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" ॥१॥ गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं धर्मं ब्रूते, शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति, हरति, कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि ।

इति द्वितीया ।

---

## स्वतन्त्रः कर्ता १ । ४ । ५४

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

## साधकतमं करणम् १ । ४ । ४२

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥

## कर्तृकरणयोस्तृतीया २ । ३ । १८

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥

इति तृतीया ।

---

अविवक्षा द्विधा प्राप्तिपूर्विका अप्राप्तिपूर्विका च । दुह्याच् पच् इति । दुह प्रपूरणे । टुयाचृ याच्ञायाम् । डुपचष् पाके । दण्ड दण्डनिपातने । रुधिर् आवरणे । प्रच्छ ज्ञीप्सायाम् । चिञ् चयने । ब्रूञ् व्यक्तायां वाचि । शासु अनुशिष्टौ । जि जये । मुष् स्तेये । णीञ् प्रापणे । हृञ् हरणे । कृष् विलेखने । वह प्रापणे । एषां धातूनां कर्मणा युक्तं कर्माकथितकर्म इत्युच्यते इत्यर्थः । उदाहरणेषु गोबलितण्डुलगर्गव्रजमाणवकदेवदत्तक्षीरनिधिदेवदत्तग्रामरूपाण्यकथितकर्माणि बोध्यानि। "स्वतन्त्रः कर्ता" "कारके" इत्यधिक्रियते। कारकत्वं च क्रियाजनकत्वमिति क्रियेत्यर्थो लभ्यते तदाह—क्रियायामिति । स्वतन्त्रत्वं च प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वम् । "साधकतमं करणम्" । साध्नोतीति साधकमतिशयेन साधकं साधकतमम् । तत्तावस्यैवार्थमाह प्रकृष्टोपकारकमिति । प्रकृष्टत्वं च यद्व्यापाराऽव्यवधानेन क्रियानिष्पत्तिस्तत्त्वम् । "कर्तृकरणयोस्तृतीया" । कर्ता च करणं च कर्तृकरणे तयोः । कर्ता च प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयः । करणं च यद्व्यापारानन्तरं कार्यनिष्पत्तिः । अनभिहिते इत्यधिक्रियते तदाह—अनभिहिते

**कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४ । ३२**

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ॥

**चतुर्थी सम्प्रदाने २ । ३ । १३**

विप्राय गां ददाति ॥

**नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ । १६**

एभिर्योगे चतुर्थी स्यात् । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः, समर्थः, शक्त इत्यादि ॥

इति चतुर्थी ।

—:०:—

**ध्रुवमपायेऽपादानम् १ । ४ । २४**

अपायो विश्लेषस्तस्मिन्साध्ये यद्ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥

**अपादाने पञ्चमी २ । ३ । २८**

ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥

इति पञ्चमी ।

---

कर्तरीत्यादि । "कर्मणा यमभिप्रैति" । अभिप्रैतीत्यस्य सम्बन्धुमिच्छतीत्यर्थः । वृत्तौ दानस्येति क्रियामात्रस्य उपलक्षणन्तेन राज्ञे निवेदितं वृत्तमित्यादयः प्रयोगा अप्युपपद्यन्ते । "चतुर्थी सम्प्रदाने" । सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानम् । संप्रपूर्वकाद्ददातेः सम्प्रदानेऽर्थे ल्युट् । सम्प्रदानचतुर्थ्या उद्देश्यत्वमर्थः । तेन विप्राय गां ददातीत्यस्य विप्रोद्देश्यकं गोकर्मकं दानमित्यर्थः । "नमः स्वस्ति" । नमश्च स्वस्ति च स्वाहा च स्वधा च वषट्चैतेषामितरेतरद्वन्द्वः । एषां योगस्तस्मात् । करशिरःसंयोगानुकूलव्यापारो नमःशब्दार्थः । स्वस्तिशब्दः कल्याणवाचकः । स्वाहाशब्दः अग्न्युद्देश्यकसमर्पणार्थकः । स्वधा शब्दः पित्रुद्देश्यकदानार्थकः । अलं शब्दः पर्याप्त्यर्थकः । "ध्रुवमपायेऽपादानम्" । अपायो विश्लेषः ( विभागः ) तस्मिन् ध्रुवं यत्तदपादानमिति सूत्राक्षरार्थः । एतत्फलितमेव वृत्तौ विशदरूपेणाह—अपायो विश्लेष इत्यादि । विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वं ध्रुवत्वम् । उदाहरणे ग्रामादायातीत्यादौ विभागजनकव्यापाराश्रयो देवदत्तादिः अनाश्रयो ग्रामादिस्स एव ध्रुवशब्देन विवक्षितस्तस्यैवापादान-

## षष्ठी शेषे २ । ३ । ५०

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो-दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः ॥

इति षष्ठी ।

---

## आधारोऽधिकरणम् १ । ४ । ४५

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥

## सप्तम्यधिकरणे च २ । ३ । ३६

अनभिहिते अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे

---

संज्ञा तत एव च पञ्चमीति बोध्यम् । एधो दकस्योपस्कुरुते । एधः काष्ठं (इन्धनम्) दकस्योदकस्य उपस्कुरुते गुणमाधत्ते इति तदर्थः, जलगतशैत्यं (आर्द्रतां) गृह्णातीति यावत् । एधशब्दोऽदन्तः पुल्लिङ्गः, एधाः पच्यन्ते इति "कारक" इति सूत्रस्थभाष्यप्रयोगात् । सान्तः क्लीबोऽपि । "आधारोऽधिकरणम्" । आध्रियते ऽस्मिन्नित्याधारः । आङ्पूर्वकाद्धरतेरधिकरणे घञ् । अधिक्रियतेऽस्मिन्नित्यधिकरणम् । अधिपूर्वकात्करोतेर्ल्युट् । आधारोऽधिकरणसंज्ञ इत्यर्थे कस्याधार इत्याकाङ्क्षोदये क्रियाधारो गृह्यते तत्र साक्षात्क्रियाया आधाराभावात् कर्तृकर्मद्वारा कर्तृकर्मनिष्ठक्रियाया आधारो गृह्यते तदाह—कर्तृकर्मद्वारा तन्निष्ठक्रियाया इति । 'कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति ॥ "सप्तम्यधिकरणे च" । "अनभिहिते" इत्यधिकारात् चकाराद् "दूरान्तिकार्थेभ्यो द्वितीया च" इत्यस्याप्यनुकर्षणाच्चाह–अनभिहिते अधिकरणे सप्तमी स्याच्चकाराद् दूरान्तिकार्थेभ्य इति । औपश्लेषिकः । उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम् । अयं प्रथम आधारः । अस्योदाहरणम्, कटे आस्ते । कटसमीपे आस्ते इत्यर्थः । अत्राऽऽसनक्रियाकर्ता देवदत्तादिस्तद्द्वाराऽऽसनक्रियाधारस्याऽधिकरणसंज्ञेति । वैषयिकः । विषये भवो वैषयिकः । अयं द्वितीय आधारः । अस्योदाहरणम्–स्थाल्यां पचति । पाकक्रियाकर्म तण्डुलादि तद्द्वारा पाकक्रियाधारभूतायाः स्थाल्या अधिकरणसंज्ञा । अस्य द्वितीयमुदाहरणम्—मोक्षे इच्छा-

इच्छाऽस्ति । सर्वस्मिन्नात्माऽस्ति । वनस्य दूरे अन्तिके वा ॥

इति सप्तमी ।

इति विभक्त्यर्थाः ॥

# अथ समासाः ।

समासः पञ्चधा। तत्र समसनं समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः । प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः । प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः । तत्पुरुषभेदः कर्मधारयः, कर्मधारयभेदो द्विगुः । प्रायेणान्यपदार्थप्रधानो

---

ऽस्ति । अत्रास्तिक्रियायाः कर्त्री इच्छा तद्द्वारा अस्तिक्रियायाधारभूतस्य मोक्षस्याधिकरणसंज्ञा । अभिव्यापकः । अभि सर्वतो भावेन व्याप्नोतीति अभिव्यापकः । य आधारः सर्वमभिव्याप्नोति सोऽभिव्यापक इत्युच्यते । अस्योदाहरणम् । सर्वस्मिन्नात्माऽस्ति । सर्वानभिव्याप्य आत्मा वर्तत इत्यर्थः । अत्राऽस्तिक्रियाकर्ता आत्मा तद्द्वाराऽस्तिक्रियाधारभूतस्य सर्वस्याधिकरणसंज्ञा । **अथ समासप्रकरणम् । तत्र समसनं समासः** । तत्र पञ्चविधेषु समासेष्वित्यर्थः । समसनमित्यस्य मिलनमित्यर्थः । तच्च पृथगर्थपदानामेकार्थोपस्थितिजनकत्वरूपमित्यर्थः । **स च विशेषसंज्ञाविनिर्मुक्तः** । विशेषाश्च ताः संज्ञा विशेषसंज्ञा अव्ययीभावादयस्ताभिर्विनिर्मुक्तो रहितो विशेषसंज्ञाविनिर्मुक्तः । अव्ययीभावादिविशेषसंज्ञारहितः केवलसमास इत्यभिधीयते । **प्रायेण पूर्वपदार्थप्रधानः** । पूर्वश्चासौ पदार्थः पूर्वपदार्थः स प्रधानो यस्मिन् स पूर्वपदार्थप्रधानः । यस्मिन् समासे पूर्वपदार्थस्य प्राधान्यं सोऽव्ययीभावसंज्ञक इत्यर्थः । सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावेऽपि सूपोन्मत्तयोः पूर्वपदार्थयोरप्राधान्यात्प्रसक्तव्यभिचारविनिवृत्त्यर्थमुक्तलक्षणे प्रायेणेति पदम् । **प्रायेणोत्तरपदार्थप्रधानः** । उत्तरपदार्थः प्रधानो यस्मिन् स उत्तरपदार्थप्रधानः । यस्मिन् समासे उत्तरपदार्थस्य प्राधान्यं स तत्पुरुषसंज्ञक इत्यर्थः । तत्पुरुषसमासेऽप्यतिमालादावतिक्रमणकर्तृत्वरूपपूर्वपदार्थस्यैव प्राधान्येन मालादिरूपोत्तरपदार्थस्याप्राधान्यादुक्तलक्षणे प्राप्तव्यभिचारनिवृत्तये प्रायेणेति पदम् । **प्रायेणान्यपदार्थप्रधानः** । अन्यः पदार्थः प्रधानो यस्मिन् सोऽन्यपदार्थप्रधानः । यस्मिन् समासेऽन्यपदार्थस्य वार्त्तिपदार्थातिरिक्तपदार्थस्य प्राधान्यं स बहुव्रीहिसंज्ञक इत्यर्थः । बहुव्रीहावपि द्वित्रा इत्यादावन्यपदार्थस्याऽप्राधान्यात्प्रायेणेत्युक्तम् ।

बहुव्रीहिश्चतुर्थः । प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ॥

## समर्थः पदविधिः २ । १ । १

पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥

## प्राक्कडारात्समासः २ । १ । ३

कडाराः कर्मधारये इत्यतः प्राक्समास इत्यधिक्रियते ॥

## सह सुपा २ । १ । ४

सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः, स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूतोभूतपूर्वं इति लौकिकः । पूर्वं अम् भूत सु इत्यलौकिकः । "भूतपूर्वे चरट्" इति निर्देशाद्भूतशब्दस्य

---

प्रायेणोभयपदार्थप्रधानः । उभयः पदार्थः प्रधाना यस्मिन् स उभयपदार्थप्रधानः । यस्मिन् समासे उभयपदार्थस्य प्राधान्यं स द्वन्द्वसंज्ञक इत्यर्थः । पाणिपादमित्यादिद्वन्द्वेऽप्युभयपदार्थस्याऽप्राधान्यादुक्तं प्रायेणेति । "समर्थःपदविधिः" । सामर्थ्यं द्विविधं व्यपेक्षारूपम् एकार्थीभावरूपञ्च । तत्र स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशात्परस्परसम्बन्धरूपा व्यपेक्षा । सा च राज्ञः पुरुष इत्यादिवाक्ये एव । पृथगर्थपदानामेकार्थोपस्थितिजनकत्वरूपश्चैकार्थीभावः । स च राजपुरुष इत्यादिवृत्तावेव । "सह सुपा" । 'सुबामन्त्रिते पराङ्गवत्स्वरे" इत्यतः सुबिति वर्तते । अनेनैव समासिद्धौ "अव्ययम्"इत्यादिना समासविधानं "सह सुपा"इत्यस्य वैकल्पिकत्वे ज्ञापकं तदाह–सुप् सुपा वा समस्यत इति । परार्थाभिधानं वृत्तिः । परार्थाभिधानमित्यंशो लक्षणं वृत्तिश्च लक्ष्यम् । "कृत्तद्धित" इत्यादीनां वृत्तिरिति पूर्वाचार्याणां संज्ञा । प्रत्ययान्तर्भावेणाऽपरपदार्थान्तर्भावेण वा यो विशिष्टोऽर्थः स परार्थः सोऽभिधीयते येन तत्परार्थाभिधानमित्यर्थः । अत एव तिङन्ते न वृत्तित्वं भवति । तत्रैकार्थीभावानङ्गीकारात् । तिङन्तेऽपि वृत्तित्वे तु मृदु पचतीत्यादौ फले मृदुत्वान्वयो न स्यात्।"सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न"इति स्वीकारादिति केचित् । परस्य शब्दस्य योऽर्थस्तस्याभिधानं कथनं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । यथा राजपुरुष इत्यादौ वाक्यकाल एव राजशब्देन पुरुषार्थोऽभिधीयते इति समर्थसूत्रस्थकैयटः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। वृत्तीनां पञ्चविधानामर्थस्यावबोधकं वाक्यं विग्रह इत्यर्थः । सच लौकिकोऽलौकिकश्चेति । लोके प्रयोगार्हो लौकिकः । लोके प्रयोगानर्होऽलौकिक इत्यर्थः । "भूतपूर्वे चरट्" इति निर्देशाद्भूतशब्दस्य

पूर्वनिपातः ( इवेन समासो विभक्त्यलोपश्च ) वागर्थौ इव वागर्थाविव ।

इति केवलसमासः प्रथमः ॥

## अथाव्ययीभावः ।

### अव्ययीभावः २ । १ । ५

अधिकारोऽयं प्राक् तत्पुरुषात् ॥

### अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते । प्रायेणाविग्रहो नित्यसमासः प्रायेणास्वपदविग्रहो वा । विभक्तौ-हरि ङि अधि इति स्थिते ॥

### प्रथमानिर्दिष्टं समास उपसर्जनम् १ । २ । ४३

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

### उपसर्जनं पूर्वम् २ । २ । ३०

समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेश-

---

पूर्वनिपातः । पूर्वं भूतो भूतपूर्वः इत्यत्र पूर्व अम् भूत सु इति विग्रहे पूर्वभूतयोरुभयोः प्रथमान्तत्वेनोपसर्जनसंज्ञायां पूर्वप्रयोगे पर्यायतया प्राप्तेऽपि पूर्वकालिकभवनमित्यर्थे भवनक्रियायाः पूर्वशब्दस्य विशेषणत्वेन लौकिकोपसर्जनत्वविशिष्टशास्त्रीयोपसर्जनत्वतः पूर्वशब्दस्यैव पूर्वप्रयोगप्राप्तौ "भूतपूर्वे चरट्" इति निर्देशाद्भूतशब्दस्यैव पूर्वप्रयोग इति भावः । "अव्ययं विभक्ति" । अव्ययमिति शब्दनिर्देशः । विभक्त्यादिरर्थनिर्देशः । विभज्यते प्रातिपदिकार्थोऽनयेति व्युत्पत्त्या विभक्तिरिह कारकशक्तिः । समासाऽव्ययीभावयोरधिकारः । "समर्थः पदविधिः" इति समर्थ इति "सह सुपा" इत्यतः सुपेति च वर्तते । सुप् प्रत्ययः प्रत्ययग्रहणपरिभाषया ततस्तदन्तविधिस्तदाह—विभक्त्यर्थादिषु वर्तमानमित्यादि । "प्रथमानिर्दिष्टं समास उपसर्जनम्" । अत्र समासपदं लक्षणया समासविधायकशास्त्रपरम् । तथा च समासविधायकशास्त्रे प्रथमान्ततयोच्चरितं यत्पदं तदुपसर्जनसंज्ञमितिनिष्कृष्टोऽर्थः । "उपसर्जनं पूर्वम्" । अत्र सूत्रे लौकिकोपसर्जनं शास्त्रीयोपसर्जनं च गृह्यते । एक-

विकृतस्यानन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । "अव्ययीभावश्च" इत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥

**अव्ययीभावश्च २ । ४ । १८**

अयं नपुंसकं स्यात् । गाः पातीति गोपस्तस्मिन्नित्यधिगोपम् ।

**नाव्ययीभावादतोऽम्त्वपञ्चम्याः २ । ४ । ८३**

अदन्तादव्ययीभावात्सुपो न लुक् तस्य तु पञ्चमीं विना अमादेशश्च स्यात् ।

**तृतीयासप्तम्योर्बहुलम् २ । ४ । ८४**

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । उपकृष्णम् , उपकृष्णेन । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥

**अव्ययीभावे चाकाले ६ । ३ । ८१**

सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत्सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां सम्पत्तिः स-

---

देशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायाम् । छिन्नपुच्छे शुनि यथा श्वत्वव्यवहारो न विहन्यते तथा सुब्विशिष्टस्य प्रातिपदिकत्वे सुपो निवृत्तावपि प्रातिपदिकत्वं न विहन्यते इत्यर्थः । "अव्ययीभावश्च" । "स नपुंसकम्" इत्यतो नपुंसकमिति वर्तते तदाह—अयं नपुंसकं स्यादिति । स्त्रीप्रत्ययान्तोत्तरपदाव्ययीभावे स्त्रीप्रत्ययान्तस्योपसर्जनत्वात् "गोस्त्रियोरुपसर्जनस्य" इत्यनेनैव ह्रस्वत्वसिद्धावत्स्त्रीप्रत्ययान्तस्योपसर्जनस्य ह्रस्वत्वविधानमेवास्य नपुंसकसंज्ञाप्रयोजनमित्यवधार्यम्—गाः पातीति । "नाव्ययीभावादतो" । अत इत्यस्याव्ययीभावं प्रति विशेषणत्वात्तदन्तविधिः । "अव्ययादाप्सुपः" इत्यतः सुप इति लुगिति च तदाह—अदन्तादित्यादि । "तृतीयासप्तम्योः" । "नाव्ययीभावात्" इत्यतोऽदन्तादव्ययीभावादिति अम् चानुवर्तते तदाह—अदन्तादव्ययीभावादित्यादि । मद्राणां समृद्धिः । ऋद्धेराधिक्यं समृद्धिः । यवनानां व्यृद्धिः । विगता ऋद्धिरिति व्यृद्धिः । "अव्ययीभावे चाकाले" । "सहस्य सः संज्ञायाम्" इत्यतः सहस्य स इत्यनुवर्तते तदाह—सहस्य सः स्यादिति । क्षत्राणां सम्पत्तिः । अनुरूप-

क्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥

## नदीभिश्च २ । १ । २०

नदीभिः सह सङ्ख्या समस्यते । समाहारे चायमिष्यते । पञ्चगङ्गम् । द्वियमुनम् ॥

## तद्धिताः ४ । १ । ७६

आपञ्चमसमाप्तेरधिकारोऽयम् ॥

## अव्ययीभावे शरत्प्रभृतिभ्यः ५ । ४ । १०७

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । जराया जरश्च । उपजरसमित्यादि

## अनश्च ५ । ४ । १०८

अन्नन्तादव्ययीभावाट्टच् स्यात् ॥

## नस्तद्धिते ६ । ४ । १४४

नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते । उपराजम् । अध्यात्मम् ॥

## नपुंसकादन्यतरस्याम् ५ । ४ । १०९

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् , उपचर्म ॥

## झयः ५ । ४ । १११

झयन्तादव्ययीभावाट्टच् स्यात् । उपसमिधम् , उपसमित् ॥

इत्यव्ययीभावः ॥

---

# अथ तत्पुरुषः ।

## तत्पुरुषः २ । १ । २२

---

आरम्भावः संपत्तिः । "नदीभिश्च" "संख्या वंश्येन" इत्यतः संख्येत्यनुवर्तते तदाह—संख्या समस्यत इति । "अव्ययीभावे शरत्प्रभृतिभ्यः" । "समासान्ताः" इत्यधिक्रियते । "राजाहःसखिभ्यष्टच्" इत्यतष्टजनुवर्तते तदाह-टच् स्यात्समासान्त इति । "अनश्च" । "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यतोऽनुवृत्तस्याऽव्ययीभावे इत्यस्य अन इति विशेषणानुरोधात् पञ्चम्या विपरिणामः । टचश्चानुवृत्तिः विशेषणेन तदन्तविधिस्तदाह—अन्नन्तादिति । "नस्तद्धिते" । न इत्यनेन "भस्य" इत्यधिकृतं विशेष्यते विशेषणेन तदन्तविधिस्तदाह—नान्त-



अधिकारोऽयम् प्राग्बहुव्रीहेः ॥

## द्विगुश्च २ । १ । २३

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

## द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः । कृष्णं श्रितः कृष्णश्रित इत्यादि ॥

## तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३०

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् ? अक्ष्णा काणः ॥

## कर्तृकरणे कृता बहुलम् २ । १ । ३२

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । "कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम्" नखनिर्भिन्नः ॥

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २ । १ । ३६

चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । तेनेह न । रन्धनाय स्थाली । ( अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् ) द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥

---

स्य भस्येति । अथ तत्पुरुषः । "द्वितीयाश्रितातीत" । "प्राक्कडारात्समासः" इत्यतः समास इत्यधिक्रियते, "सह सुपा" इत्यनुवर्तते, तत्पुरुष इत्यधिक्रियते, "विभाषा" इति च, केवलस्य द्वितीयासुपः प्रयोगाभावात्तदन्तविधिः । श्रितादिशब्दानां स्वतः सुप्त्वाभावेन लक्षणया श्रितादिप्रकृतिकत्वपरता । तदाह—श्रितादिप्रकृतिकैरित्यादि द्वितीयान्तं । "तृतीया तत्कृतार्थेन" । तत्पदेन तृतीया गृह्यते । उदाहरणे सङ्घटनप्रकारश्चेत्थम्—तृतीयान्तं शङ्कुलयेति तदर्थः शङ्कुलारूपोऽस्त्रविशेषस्तत्कृतो गुणः खण्डरूपस्तद्वाचकशब्दः खण्डरूपस्तेन सह अर्थशब्देन च सह तृतीयान्तं शङ्कुलयेति समस्यत इति । "चतुर्थी तदर्थार्थ" । अत्र तत्पदेन चतुर्थ्यन्तस्य ग्रहणम् । उदाहरणे संघटनं तु चतुर्थ्यन्तं यूपायेति तदर्थः पशुबन्धनार्थं काष्ठमूर्तिविशेषस्तदर्थं वस्तु दार्विति तद्वाचकःशब्दो दारुशब्दस्तेन सह समस्यते । तदर्थेनेति । बलिरक्षितग्रहणाज्ज्ञापितोऽयमर्थ इति भावः । विशेष्यलिङ्गतेति । "प-





## पञ्चमी भयेन २ । १ । ३७

चौराद्भयम् , चोरभयम् ॥

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९

## पञ्चम्याः स्तोकादिभ्यः ६ । ३ । २

"अलुगुत्तरपदे" । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥

## षष्ठी २ । २ । ८

सुबन्तेन सह प्राग्वत् । राजपुरुषः ॥

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसङ्ख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥

## अर्धं नपुंसकम् २ । २ । २

समांशवाच्यर्धशब्दो नित्यं क्लीबे प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली ॥

## सप्तमी शौण्डैः २ । १ । ४०

सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । "द्वितीयातृतीया" इत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ।

## दिक्सङ्ख्ये संज्ञायाम् २ । १ । ५०

संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न । उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

## तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१

---

स्वलिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनेन पुंस्त्वस्य प्राप्तौ तदपवादोऽयं विधीयत इति भावः । "पञ्चम्याः स्तोकादिभ्यः" । "अलुगुत्तरपदे" इत्यस्याधिकारादाह—अलुगुत्तरपदे इति । "षष्ठी" । "प्राक्कडारात्समासः" "सह सुपा" "विभाषा" "तत्पुरुषः" एतेषामधिकारादाह—सुबन्तेनेति । पूर्वापराधरोत्तरमिति । एकदेशिशब्दोऽवयविवाचकः । अधिकरणशब्दः संख्यावाचकः । षष्ठीसूत्रवत् "प्राक्कडारात्समास" इत्यादि सर्वमनुवर्तते तदाह—अवयविना सहेत्यादि । षष्ठीसमासापवाद इति । अवयवावयविवाचकशब्दयोः प्रयोगेऽवयविवाचकशब्दात्षष्ठ्या आवश्यकतया षष्ठीतत्पुरुषस्यावश्यं प्राप्तावारभ्यमाणः एकदेशिसमासः षष्ठीसमासस्य बाधक इत्यर्थः ।

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत् । पूर्वस्यां शालायां भवः पूर्वा शाला इति समासे जाते । ( सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ) ॥

## दिक्पूर्वपदादसंज्ञायां ञः ४ । २ । १०७

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥

## तद्धितेष्वचामादेः ७ । २ । ११७

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । "यस्येति च" । पौर्वशालः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ ( द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ) ॥

## गोरतद्धितलुकि ५ । ४ । ९२

गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ।

## तत्पुरुषः समानाधिकरणः कर्मधारयः १ । २ ४२

## सङ्ख्यापूर्वो द्विगुः २ । १ ५२

तद्धितार्थेत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसंज्ञः स्यात् ।

## द्विगुरेकवचनम् २ । ४ । १

द्विगवर्थः समाहार एकवत् स्यात् ॥

## स नपुंसकम् २ । ४ । १७

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ॥

## विशेषणं विशेष्येण बहुलम् २ । १ । ५७

---

सर्वनाम्न इति । इदं च भाष्यम् सर्वनाम्नः सर्वनामसंज्ञकशब्दस्य वृत्तिमात्रे सर्वासु वृत्तिषु पुंवद्भावः पुंल्लिङ्गे यादृशं रूपं तत्प्राप्तिर्भवतीति तदर्थः । स्त्रीप्रत्ययनिमित्तभूतस्य स्त्रीत्वस्य निवृत्त्या स्त्रीप्रत्ययस्य निवृत्तिरिति भावः । "तद्धितेष्वचामादेः" "मृजेर्वृद्धिः" इत्यतो वृद्धिरित्यनुवर्तते, "अचो ञ्णिति" इति चानुवर्तते तदाह—ञिति णिति चेति । तद्धितार्थस्योदाहरणं प्रदर्श्योत्तरपदस्योदाहरणम्प्रदर्शयति—पञ्च गावो धनं यस्येतीति । "गोरतद्धितलुकि" । "समासान्ताः" इत्यधिक्रियते, "राजाहः सखिभ्यष्टच्" इत्यतष्टच् अनुवर्तते, "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इत्यतस्तत्पुरुषस्येत्यनुवर्तते पञ्चम्यन्ततया विपरिणमय्य विशेषणत्वमादाय तदन्तविधिस्तदाह—गोन्तात्तत्पुरुषादिति । "सङ्ख्यापूर्वो द्विगुः" । "तद्धितार्थोत्तरपदसमाहारे च" इत्यनुवर्त्याह—तद्धितार्थेत्यत्रेति । बहुलमिति । क्वचित्प्रवृत्तिः

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यम् । कृष्णसर्पः । क्वचिन्न । रामो जामदग्न्यः ॥

## उपमानानि सामान्यवचनैः २ । १ । ५५

घन इव श्यामो घनश्यामः । ( शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम् ) शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥

## नञ् २ । २ । ६

नञ् सुपा सह समस्यते ॥

## नलोपो नञः ६ । ३ । ७३

नञो नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥

## तस्मान्नुडचि ६ । ३ । ७४

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह "सुप् सुपा" इति समासः ॥

## कुगतिप्रादयः २ । २ । १८

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ।

## ऊर्यादिच्विडाचश्च १ । ४ । ६१

ऊर्यादयः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः । ( प्रादयो गताद्यर्थे प्रथमया ) प्रगत आचार्यः प्राचार्यः ( अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) अतिक्रान्तो मालामिति विग्रहे ॥

## एकविभक्ति चापूर्वनिपाते १ । २ । ४४

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥

## गोस्त्रियोरुपसर्जनस्य १ । २ । ४८

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः ( अवादयः क्रुष्टाद्यर्थे तृतीयया ) अवक्रुष्टः कोकिलया अवकोकिलः । ( पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ) परिग्लानोऽध्ययनाय पर्यध्ययनः ( निरादयः क्रान्ताद्यर्थे पञ्चम्या ) निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः ॥

---

क्वचिदप्रवृत्तिः । क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति । "उपमानानि" सामान्यं समानो धर्मः तं वदन्तीति सामान्यवचनानि समानधर्मवाचकाः शब्दा इत्यर्थः । तादृशैः समर्थसुबन्तैः सह उपमानवाचकाः शब्दाः समस्यन्ते इति सूत्रस्यार्थः । उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम् । 'शाकपा-

## तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्

## उपपदमतिङ् २ । २ । १९

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। अतिङ् किम्? मा भवान् भूत्। "माङि लुङ्" इति सप्तमीनिर्देशान्माङुपपदम्। 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः'। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि॥

## तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः ५ । ४ । ८६

सङ्ख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निर्गतमङ्गुलिभ्यो निरङ्गुलम्॥

## अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ५ । ४ । ८७

एभ्यो रात्रेरच् स्याच्चात्सङ्ख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥

## रात्राह्नाहाः पुंसि २ । ४ । २९

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। संख्यातरात्रः। सङ्ख्यापूर्वं रात्रं क्लीबम्। द्विरात्रम्। त्रिरात्रम्॥

## राजाहःसखिभ्यष्टच् ५ । ४ । ९१

एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः॥

## आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाराजः। प्रकारवचने जातीयर्, महाप्रकारो महाजातीयः॥

## द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्याः ६ । ३ । ४७

आत्स्यात्। द्वौ च दश च द्वादश। अष्टाविंशतिः॥

## त्रेस्त्रयः ६ । ३ । ४८

त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्॥

---

र्थिवादीनाम्'। पूर्वपदे यदुत्तरपदं तस्य लोपो वक्तव्य इत्यर्थः। "तत्पुरुषस्याङ्गुलेः"। "समासान्ता" इत्यधिक्रियते, "अच् प्रत्यन्ववपूर्वात्सामलोम्नः" इत्यतोऽनुवर्तते, विशेषणीभूतादङ्गुलिशब्दात्तदन्तविधिस्तदाह—सङ्ख्याव्ययादेरङ्गुल्यन्तस्येति। "अहः सर्वैकदेश" । पूर्वसूत्रात् "संख्याव्ययादेः" अचश्चानु-

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २ । ३ । २६

एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमौ । अर्धं-पिप्पली । ( द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेपु प्रतिषेधो वाच्यः ) पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥

## प्राप्तापन्ने च द्वितीयया २ । ४ । ४

समस्येते, अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलङ्कुमार्यै अलङ्कुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

## अर्धर्चाः पुंसि च २ । ४ । ३

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चम्, अर्धर्चः । एवं ध्वज तीर्थ शरीर मण्ड पीयूष देह अङ्कुश पात्र सूत्रादयः । "सामान्ये नपुंसकम्" । मृदु पचति । प्रातः कमनीयम् ॥

इति तत्पुरुषः ।

---

# अथ बहुव्रीहिः ।

## शेषो बहुव्रीहिः २ । २ । २३

अधिकारोऽयं प्राग् द्वन्द्वात् ।

## अनेकमन्यपदार्थे २ । २ । २४

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥

## सप्तमीविशेषणे बहुव्रीहौ २ । २ । ३५

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥

## हलदन्तात्सप्तम्याः संज्ञायाम् ६ । ३ । ९

हलन्तादवन्तात्सप्तम्या अलुक् । कण्ठेकालः । प्राप्तमुदकं यं प्राप्तोदको ग्रामः ।

---

वृत्तिस्तदाह—पश्चयो राज्ञेरजिति । वार्त्तिके प्रतिषेध इति । अर्थात्परवल्लिङ्गस्यैव प्रतिषेध इत्यर्थः । "अर्धर्चाः पुंसि च" । "अपथं नपुंसकम्" इत्यतो नपुंसकमित्यनुवर्तते तदाह—क्लीबे चेति । "सामान्ये नपुंसकम्" । लिङ्गविशेषस्याविवक्षायां नपुंसकमेव प्रयोक्तव्यमिति तदर्थः । "अनेकमन्यपदार्थे" । पूर्वसूत्रमधिक्रियते तत्रत्यशेषपदस्यार्थमाह—प्रथमान्तमिति । कण्ठे इत्यस्य सप्तम्यन्तत्वादनेकप्रथमान्तत्वाभावेन समासाप्राप्तिरत आह—अत एव ज्ञापकादिति ।

उद्धृतोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । ( प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः ) प्रपतितपर्णः प्रपर्णः । ( नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः ) अविद्यमानपुत्रोऽपुत्रः ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४

उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिर्निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । "गोस्त्रियोः" इति ह्रस्वः । । चित्रगुः । रूपवद्भार्यः । अनूङ् किम् ? वामोरूभार्यः ॥

## अप्पूरणीप्रमाण्योः ५ । ४ । ११६

पूरणार्थप्रत्ययोन्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः। अप्रियादिषु किम् ? कल्याणीप्रिय इत्यादिः ॥

## बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५ । ४ । ११३

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः "अक्ष्णोऽदर्शनात्" इति वक्ष्यमाणोऽच् ॥

## द्वित्रिभ्यां ष मूर्ध्नः ५ । ४ । ११५

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥

## अन्तर्बहिर्भ्यां च लोम्नः ५ । ४ । ११७

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः ॥ बहिर्लोमः ।

## पादस्य लोपोऽहस्त्यादिभ्यः ५ । ४ । १३८

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? हस्तिपादः । कुसूलपादः ।

## सङ्ख्यासुपूर्वस्य ५ । ४ । १४०

---

"सप्तमी विशेषणे बहुव्रीहौ" इत्येतत्सूत्रस्वरूपाज्ज्ञापकादित्यर्थः । 'प्रादिभ्यो धातुजस्य' । प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण बहुव्रीहिः पूर्वपदान्तर्गतस्योत्तरपदस्य लोपश्च वेत्यर्थः । नञोऽस्त्यर्थानामिति । नञः परेषामस्त्यर्थवाचिनां

पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥

## उद्विभ्यां काकुदस्य ५ । ४ । १४८

लोपः स्यात् । उत्काकुत् । विकाकुत् ॥

## पूर्णाद्विभाषा ५ । ४ । १४९

पूर्णकाकुत्, पूर्णकाकुदः ॥

## सुहृद्दुर्हृदौ मित्रामित्रयोः ५ । ४ । १५०

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः ॥

## उरःप्रभृतिभ्यः कप् ५ । ४ । १५१

## सोऽपदादौ ८ । ३ । ३८

पाशकल्पककाम्येषु विसर्गस्य सः ।

## कस्कादिषु च ८ । ३ । ४८

एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यत्र तु सः । इति सः । व्यूढोरस्कः ।

## इणः षः ८ । ३ । ३९

इण उत्तरस्य विसर्गस्य षः स्यात् पाशकल्पककाम्येषु परेषु । प्रियसर्पिष्कः ॥

## निष्ठा २ । २ । ३६

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ॥

## शेषाद्विभाषा ५ । ४ । १५४

अनुक्तसमासान्ताच्छेषाद्बहुव्रीहेः कप् वा स्यात् । महायशस्कः, महायशाः ।

इति बहुव्रीहिः ।

---

पदान्तरेण बहुव्रीहिः अस्त्यर्थवाचिना तु लोपो वेत्यर्थः । "उद्विभ्यां काकुदस्य" "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यतो लोप इत्यनुवर्तते तदाह—लोपः स्यादिति । "पूर्णाद्विभाषा" । पूर्वसूत्राल्लोपोऽनुवर्तते—काकुदस्येति च । "शेषाद्विभाषा" । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इत्यतो बहुव्रीहावित्यनुवर्तते तस्य सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणामः । "उरः प्रभृतिभ्यः कप्" इत्यतः कबनुवर्तते तदाह शेषपदार्थप्रदर्शनपूर्वकम्—अनुक्तसमासान्तादित्यादि ।

# अथ द्वन्द्वः ।

## चार्थे द्वन्द्वः २ । २ । २९

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । भिक्षामट गां चानय, इति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । धवखदिरौ छिन्धि इति मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषम् । समूहः समाहारः ।

## राजदन्तादिषु परम् २ । २ । ३१

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । (धर्मादिष्वनियमः) अथधर्मौ, धर्मार्थावित्यादि ॥

## द्वन्द्वे घि २ । २ । ३२

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥

## अजाद्यदन्तम् २ । २ । ३३

इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥

## अल्पाच्तरम् २ । २ । ३४

शिवकेशवौ ॥

## पिता मात्रा १ । २ । ७०

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ माता पितरौ वा ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २ । ४ । २

एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥

## द्वन्द्वाच्चुदषहान्तात्समाहारे ५ । ४ । १०६

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम्, शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् ? प्रावृट्शरदौ ।

इति द्वन्द्वः ।

---

# अथ समासान्ताः ।

## ऋक्पूरब्धूःपथामानक्षे ५ । ४ । ७४

अ अनक्षे इति च्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या

धूस्तिर्यस्य तु न । अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः दृढधूरक्षः । सखिपथः । रम्यपथो देशः ।

## अक्ष्णोऽदर्शनात् ५ । ४ । ७६

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥

## उपसर्गादध्वनः ५ । ४ । ८५

प्रगतोऽध्वानं प्राध्वो रथः ॥

## न पूजनात् ५ । ४ । ६९

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥

इति समासान्ताः ॥

# अथ ताद्धिताः, तत्रादौ साधारणप्रत्ययाः ।

## समर्थानां प्रथमाद्वा ४ । १ । ८२

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ॥

## अश्वपत्यादिभ्यश्च ४ । १ । ८४

एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् ॥

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४ । १ । ८५

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा ॥

---

अर्धर्चः । ऋचोऽर्द्धमिति विग्रहः । विष्णुपुरम् । विष्णो पूरिति विग्रहः । विमलापम् । विमला आपो यस्मिन् सरसि तदिति विग्रहः । राजधुरा । राज्ञो धूरिति विग्रहः । "न पूजनात्" ( स्वतिभ्यामेव ) इतिवार्त्तिकानुरोधात्पूजनार्थकाभ्यामेव स्वतिभ्यां समासान्तनिषेधस्तेन पूजनार्थकभिन्नादतिशब्दात्समासो भवत्येव । अतिराजीत्यादौ । अथ तद्धिताः । "समर्थानां प्रथमाद्वा" । अत्र सूत्रे सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यमिति यावत् । प्राथम्यं च तत्तत्सूत्रोच्चारितशब्दप्रतिपाद्यत्वम् । "अश्वपत्यादिभ्यश्च" । अश्वपतिरादिर्येषां तेऽश्वपत्यादयस्तेभ्यः "प्राग्दीव्यतोऽण्" इति सूत्रात्प्राग्दीव्यत इति अणिति चानुवर्तते तदाह—एभ्योऽणिति । अणोऽपवाद इति । प्राग्दीव्यतीयेष्वर्थेषु द्वयोरण्ण्य·

## हलो यमां यमि लोपः ८।४।६४

हलः परस्य यमो लोपः स्याद्वा यमि। इति यलोपः। आदित्यः। प्राजापत्यः। (देवाद्यञञौ) दैव्यम्, दैवम्। (बहिषष्टिलोपो यञ्च) बाह्यः। (ईकक् च)

## किति च ७।२।११८

किति तद्धिते चाचामादेरचो वृद्धिः स्यात्। बाहीकः। (गोरजादिप्रसङ्गे यत्) गोरपत्यादि गव्यम्॥

## उत्सादिभ्योऽञ् ४।१।८६

औत्सः।

इत्यपत्यादिविकारान्तार्थाः साधारणाः प्रत्ययाः॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७

धान्यानां भवने इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः। पौंस्नः॥

## तस्यापत्यम् ४।१।९२

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः।

## ओर्गुणः ६।४।१४६

उवर्णान्तस्य भस्य गुणः स्यात् तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः॥

## अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥

---

योः प्राप्तो सामान्यप्राप्तस्याऽणो बाधकोऽयं ण्यप्रत्यय इत्यर्थः। "हलो यमां"। "झयो होऽन्यतरस्याम्" इत्यतोऽन्यतरस्यामित्यनुवर्तते तेन वैकल्पिको लोपः। "देवाद्यञञौ"। "प्राग्दीव्यतः" इत्यधिक्रियते। "बहिषष्टिलोपो यञ्च"। "अव्ययानां भमात्रे टिलोपः" इत्यस्यानित्यतां ज्ञापयितुमिदं टिलोपवचनमारब्धम्। तेन आरातीय इत्यस्य सिद्धिः। "गोरजादिप्रसङ्गे यत्" नायं केवलमपत्य एवार्थे भवति किन्तु सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्विति बोध्यम्। "तस्यापत्यम्"। "समर्थानां प्रथमाद्वा" इत्यधिक्रियते तत्र प्रथमादित्यस्यार्थमाह--षष्ठ्यन्तादिति। समर्थानामित्यत्र सामर्थ्यं परिनिष्ठितत्वं तच्च कृतसन्धिकार्यमित्याह--कृतसन्धेरिति। "अपत्यं पौत्रप्रभृति गोत्रम्"। पौत्रप्रभृति अपत्यं गोत्रं गोत्रसंज्ञकमित्यर्थे पौत्रप्रभृतिषु साक्षादपत्यत्वाभावादाह--अपत्यत्वेन विवक्षितमिति।

## एको गोत्रे ४ । १ । ९३

गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ॥

## गर्गादिभ्यो यञ् ४ । १ । १०५

गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥

## यञञोश्च २ । ४ । ६४

गोत्रे यदञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः ॥

## जीवति तु वंश्ये युवा ४ । १ । १६३

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥

## गोत्राद्यून्यस्त्रियाम् ४ । १ । ९४

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥

## यञिञोश्च ४ । १ । १०१

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७ । १ । २

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः । गर्गस्य युवापत्यं गार्ग्यायणः । दाक्षायणः ।

## अत इञ् ४ । १ । ९५

अदन्तं यत्प्रातिपदिकं तस्मादिञ् स्यात् अपत्येर्थे । दाक्षिः ।

## बाह्वादिभ्यश्च ४ । १ । ९६

---

"एको गोत्रे" । पौत्रादौ प्रत्येकपुरुष प्रत्ययप्राप्त्या शततमे सन्ताने एकोनशत-प्रत्ययानामापत्तिरतो नियमार्थं सूत्रम् तदाह—एक एवापत्यप्रत्यय इति । एकोनशतं प्रत्यया नेष्टाः किन्त्वेक एव प्रत्यय इष्ट इति भावः । "गोत्राद्यून्यस्त्रि-याम्" । अपत्यमपत्यम्प्रतिप्रत्ययोत्पत्तौ प्राप्तद्व्यूनानिष्टप्रत्ययपरम्पराव्यावृत्तये नि-यमार्थं सूत्रं तदाह—गोत्रप्रत्ययान्तादेव प्रत्यय इति । सति सूत्रस्य नियमा-र्थत्वे युवापत्यविवक्षणेऽप्येक एव प्रत्ययो भवतीत्यनुमीयते ॥ "यञिञोश्च" । "गोत्रे कुञ्जादिभ्यः" इत्यतो गोत्रे इति "नडादिभ्यः फक्" इत्यतः फगनुवर्तते तदाह—गोत्रे याविरयादि । दाक्षायणः । दक्षस्य युवापत्यं पुमानिति विग्र-

बाहविः । औडुलोमिः । ( लोम्नोपत्येषु बहुष्वकारो वक्तव्यः ) उडुलोमाः । आकृतिगणोऽयम् ।

## अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४

ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे ॥ बिदस्य गोत्रं बैदः । बैदौ । बिदाः । पुत्रस्यापत्यं पौत्रः पौत्रौ पौत्राः । एवं दौहित्रादयः ॥

## शिवादिभ्योऽण् ४ । १ । ११२

अपत्ये । शैवः । गाङ्गः ॥

## ऋष्यन्धकवृष्णिकुरुभ्यश्च ४ । १ । ११४

ऋषिभ्यः—वासिष्ठः । वैश्वामित्रः । अन्धकेभ्य—श्वाफल्कः । वृष्णिभ्यः—वासुदेवः । कुरुभ्यः—नाकुलः । साहदेवः ॥

## मातुरुत्सङ्ख्यासंभद्रपूर्वायाः ४ । १ । ११५

सङ्ख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥

## स्त्रीभ्यो ढक् ४ । १ । १२०

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः ॥

## कन्यायाः कनीन च ४ । १ । ११६

चादण् । कानीनो व्यासः कर्णश्च ॥

## राजश्वशुराद्यत् ४ । १ । १३७

( राज्ञो जातावेवेति वाच्यम् )

## ये चाभावकर्मणोः ६ । ४ । १६८

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । श्वशुर्यः । जातावेवेति किम् ?

---

हा । दाक्षिरिति । दक्षस्यापत्यं दक्षस्य गोत्रापत्यं च पुमानिति विग्रहः । औडुलोमिः । उडूनीव लोमानि यस्य स उडुलोमा उडुलोम्नोऽपत्यं पुमानिति विग्रहः । वासिष्ठः । वसिष्ठस्यापत्यमिति विग्रहः । वैश्वामित्रः । विश्वामित्रस्यापत्यमिति विग्रहः । श्वाफल्कः । श्वफल्कस्यापत्यमिति विग्रहः । वासुदेवः । वसुदेवस्यापत्यमिति विग्रहः । नाकुलः । नकुलस्यापत्यमिति विग्रहः । साहदेवः । सहदेवस्यापत्यमिति विग्रहः । "मातुरुत्संख्या" । "शिवादिभ्योऽण्" इत्यतोऽणित्यनुवर्तते तदाह—अण् प्रत्ययश्चेति । उदाहरणे—द्वैमातुरः । द्वयोर्मात्रोरपत्यमिति विग-

